# UTTARA RÁMACHARITA.

## A SANSKRIT DRAMA

BY

# BHAVABHÚTI.

EDITED AT THE REQUEST OF

EDWARD B. COWELL, M. A.

**Principal of the Sanskrit College of Bengal,**

BY

PREMACHANDRA TARKABÁGÍSÁ,

PROFESSOR OF RHETORIC IN THAT INSTITUTION.

WITH A SHORT COMMENTARY.




**Calcutta:**

PRINTED AT THE BANGALA PRESS.

1862.

# उत्तररामचरितम् ।

नाम

नाटकं ।

—०()()०—

महाकविश्रीभवभूतिविरचितं ।

—०*०—

श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्य्यकृत

संक्षिप्तटीकासहितं ।

—००—

संस्कृतपाठशालाध्यक्ष

श्रीयुक्तकावोयल्साहेबस्यानुमत्या ।

---

कलिकाता ।

वाङ्गालायन्त्रे मुद्रितम् ॥

शकाब्दाः १७८३ । ई १८६२ ॥

# NOTICE.

The Sanskrit College edition of Sakuntalá (published in 1860) having been favourably received in Europe as well as in this country, I have been encouraged to continue the series by the publication of the Uttara Ráma Charita.

This drama was printed in Calcutta in 1830, under the authority of the Committee of Public Instruction, but that edition has long since ceased to be procurable.

The present edition has been prepared (like that of the Sakuntalá) by Pundit Prema Chandra Tarkabágísa, the Professor of Rhetoric in the Sanskrit College of Calcutta; and he has compared the former printed text with two manuscripts, one procured from Benares, the other in the Telingana character, lent to me by Pundit Lingam Lakshmoji of Vijayanagaram. Several errors have in this way been corrected and some preferable readings adopted. As an example I would only mention the change introduced in the 7th line of the second page, where the unintelligible reading of the old edition is very happily altered to

एषोऽहं कार्य्यवशादायोध्यिकस्तदानीन्तनश्च संवृत्तः ।

The Pundit has also added a short commentary, similar to that printed with the Sakuntalá, and I

do not doubt that this will be particularly acceptable, as the only commentary on the Drama, which has fallen in my way, is a very inferior performance.*

EDWD. B. COWELL,
*Principal Sanskrit College.*

*Calcutta,*
*March 20th,* 1862.

* Written by Bhadra Náráyana; there is a M. S. of it in the Sanskrit College Library (No. 93.)

# विज्ञापनी ।

—०()*()०-

उत्तररामचरितं नाम नाटकमिदं सुविख्यातकवित्वकीर्त्तिना श्रीभवभूतिनाम्ना महाकविना विरचितं, स किल विदर्भविषय वर्त्तिनि पद्मनगरनाम्नि नगरे काश्यपकुलतिलकान्नीलकण्ठ-नामकाच्छ्रोत्रियद्विजोत्तमादुदभूत्, भोजप्रबन्धादिप्रबन्धालोच नया विज्ञातमिदं, यदसौ महाकविर्धारानगरीपतेर्भोजभूभुजः कान्यकुब्जेश्वरस्य च यशोवर्म्मणः समाजे सामाजिकप्रधानतां प्रपेदे, दृश्यन्ते चास्य मालतीमाधवमहावीरचरितोत्तररामचरि-ताभिधेयाः सहृदयहृदयबन्धाल्लयः प्रबन्धाः। ततश्च तत्कृतमेत न्नाटकमितोऽर्व्वाक् सहस्रतमादपि संवत्सरात्पूर्व्वं सम्भूतमिति सम्भाव्यते। नाटके चास्मिन् करुणानुप्राणितो विप्रलम्भशृङ्गार रसः प्रधानं, स च प्रसाद,वस्तुस्वभावस्फुटत्वादिगुणगुम्फितै रलङ्कारालङ्कृतैश्च तैस्तैः पदपदार्थैरेवमुद्दीपितः येन सद्यएव विद्वज्जनाः कामपि कारुण्यजर्ज्जरां लोकोत्तरचमत्कारसारां नि-र्वृतिमनुभवन्ति।

पूर्व्वमस्मिन् प्रदेशे विरलप्रचारस्यास्य पुस्तकमेकं संस्कृत विद्यैकपक्षपातिना श्रीमद्बुइलसनसाहेबेन कुतश्चिदानीय मुद्रया व्यञ्जीकृतं, तच्च शोधितमप्यन्तरान्तरा परिशुद्धिविरहितमस-स्कृतञ्चासीत्।

संप्रति कलिकातासंस्कृतविद्यामन्दिराधिपतिना मतिमतां

प्रवीणेन श्रीमता काशीरामसाहेबेनाप्यादिष्टोऽतः कतिचित् पुस्तकान्यानाय्य संक्षिप्तटीकाकरणपुरःसरतत्परिशोधनायाहमादिष्टः । मया च तदादेशवशंवदेन यथामति तत्सर्वमनुष्ठितम् ।

सोऽहं संप्रति सहृदयधुरीणान् सविनयमनुबध्ने, विधीयतां भवद्भिरत्र समादरः, प्रयातु च मे प्रयासः सफलतामिति ।

श्रीप्रेमचन्द्र शर्मा

# उत्तररामचरितम्

नाम

नाटकम्।



इदं कविभ्यः पूर्व्वेभ्योनमोवाकं प्रशास्महे।
विन्देम देवतां वाचममृतामात्मनः कलाम्॥ *

नान्द्यन्ते † सूत्रधारः।

---

* पूर्व्वेभ्यः कविभ्योवाल्मीक्यादिभ्यः नमोवाकं नमउक्ता। वैदिकोऽयं प्रयोगः क्वाप्रत्ययान्तः चस्य कादेशश्छान्दसः। नमस्कारस्य वाकोवचनं यत्र तद्यथा तथेति क्रियाविशेषणं वा नमस्कारस्य कायिकवाचिकमानसिकत्वेन त्रिरूपतया वाचिकं नमस्कारं कृत्वेत्यर्थः। इदं वक्ष्यमाणं प्रशास्महे प्रार्थयामहे। इदं पदस्य प्रतिपाद्यमाह विन्देमेति वयं वाचं देवतां विन्देम लभेमहि, वाचः कथं देवतात्वमिति विशेषणाभ्यामुपपादयति, अमृतां नित्यां, शब्दोनित्यइति मीमांसकाः। तथा आत्मनोब्रह्मणः कलामंशभूताम् अन्याअपि देवता नित्याब्रह्मणोऽंशभूताश्च। अमृतां रसवतीमिति अमृताख्यामितिच केचित्। कविभ्यइत्यत्र गुरुभ्यइति क्वचित्पाठः।

† नान्द्यन्तइति नान्दीलक्षणं यथा भरते। देवद्विजनृपादीनामाशीर्व्वादपरायणा। नन्दन्ति देवतायस्मात्तस्मान्नान्दी प्रकीर्त्तिता। अन्यत्रच, देवद्विजनृपादीनामाशीर्वन्दनपूर्व्विका। नान्दी कार्य्या बुधैर्यत्नान्नमस्कारेण संयुतेति।

अलमतिविस्तरेण। अद्य खलु भगवतः कालप्रियनाथस्य * यात्रायामार्य्यमिश्रान् † विज्ञापयामि, एवमत्रभवन्तोविदां कुर्व्वन्तु ‡ अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठपदला ञ्छनो § भवभूतिर्नाम।

यं ब्राह्मणमियं देवी वाग्वश्येवानुवर्त्तते।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते॥ ¶

एषोऽहं कार्य्यवशादायोध्यिकस्तदानीन्तनश्च संवृत्तः।** समन्तादवलोक्य। भो भो यदि तावदत्रभवतः पौलस्त्य कुलधूमकेतोर्महाराजरामस्यायमभिषेकसमयोरात्रिन्दिवमसं-

---

* कालप्रियनाथस्य उज्जयिनीस्थमहाकालाभिधानस्य शिव-लिङ्गस्य।

† आर्य्यमिश्रान् सामाजिकश्रेष्ठान्।

‡ विदांकुर्व्वन्तु, जानन्तु वेत्तेर्लोट आम्।

§ श्रीकण्ठपदलाञ्छनः श्रीकण्ठपदोपाधिकः।

¶ ब्राह्मणमित्यत्र ब्रह्माणमिति क्वचित्पाठः, तत्र ब्रह्माणं यमिति व्यस्तरूपकं ब्रह्माणं यथा वाग्देवी अनुवर्त्तते तथा इममित्यर्थः। वश्येव वशंगता काचित् स्त्रीव। अनुवर्त्तत इत्यत्र अन्ववर्त्ततेति भूतप्रयोगोनरुचिरः। प्रयोक्ष्यतइति अस्माभिरिति शेषः।

** कार्य्यवशात् अयोध्याधिपरामस्य प्रमोदजनकत्वादि कार्य्यानुरोधात्, आयोध्यिकः स्वदेशादयोध्यायामागतः तदानीन्तनश्च रामसमकालीनश्च संवृत्तस्तदभिमानी जातः।

हृतानन्दनान्दीक * स्त्विमिति विश्रान्तचारणानि चत्वर-स्थानानि। †

प्रविश्य नटः। भाव! प्रेषिताह्वीतः स्वगृहा ‡ न्महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गराक्षसाः, सभाजनोपस्थायिनो § नानादिगन्तागताश्च ब्रह्मर्षयो राजर्षयश्च, यदाराधनायैतावतो दिवसानुत्सव आसीत्। अन्यच्च

वशिष्ठाधिष्ठिता देव्यो गता राघवमातरः।

अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम्॥

सूत्र। वैदेशिकोऽस्मीति पृच्छामि कः पुनरसौ जामाता।

नटः। कन्यां दशरथो राजा शान्तां नाम व्यजीजनत्।

अपत्यकृतिकां ¶ राज्ञे लोमपादाय यां ददौ॥

---

* असंहृतानन्दनान्दीकः अवारितानन्दजनकगीतवादित्रादिः।

† विश्रान्तानिर्व्यापाराश्चारणानटा यत्र तानि चत्वरस्थानानि रङ्गाजिराणि।

‡ इतोऽयोध्यातः स्वगृहान् स्वान् स्वानालयान् प्रेषिताह्वीत इत्यत्र प्रेषिता हि ते इति क्वचित्पाठः।

§ सभाजनाय सम्माननार्थमुपस्थायिनः समागताः। समाजोपस्थायिन इति पाठस्तु न मनोरमः।

¶ अपत्यकृतिकां कृत्रिमपुत्रिकारूपां। यथाह मनुः। सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणम्। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः॥ पुत्रमित्यत्र पुंस्त्वमविवक्षितं स्त्रिया अपि कृत्रिमत्वादिकं सम्भवति, यथा एवञ्च औरसदुहित्रभावे दौहित्रकृतलोकप्राप्त्यर्थं क्षेत्रजादिदुहितृणामपि प्रतिनिधित्वेनोपादानं सिद्धमेवेति दत्तकमीमांसा।

विभाण्डकसुतस्तामृष्यशृङ्ग उपयेमे, तेनच सांप्रतं द्वादशवार्षिकं सत्रमारब्धं, तदनुरोधात्कठोरगर्भामपि बधूं जानकीं विमुच्य गुरुजन * स्तत्र गतइति ।

सूत्र । तत्किमनेन † एहि राजद्वारमेव स्वजातिसमये नोपतिष्ठावः । ‡

नटः । तेन हि निरूपयतु राज्ञः सुपरिशुद्धा § मुपस्थानस्तोत्रपद्धतिं भावः ।

सूत्र । मारिष !

सर्व्वथा व्यवहर्त्तव्ये कुतोह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्ज्जनोजनः ॥ ¶

नटः । अतिदुर्ज्जनइति वक्तव्यम् ।

देव्यामपि हि वैदेह्यां सापवादो ** यतोजनः ।

---

* गुरुजनः कौशल्यादिकः ।

† अनेन उत्सवाभावकारणानुसन्धानेन ।

‡ स्वजातिर्वन्दिजातिस्तस्याः समयआचारः राजस्तुतिकरणरूपस्तेन उपतिष्ठावोगच्छावः ।

§ सुपरिशुद्धामिति यथास्माकं वचनीयता न भवेदिति भावः ।

¶ व्यवहर्त्तव्ये व्यवहरणीये विषये सर्व्वथा साकल्येन अवचनीयता अनिन्द्यता कुतः । व्यवहर्त्तव्यमिति पाठेतु सर्व्वथा सर्व्वाङ्गपरिशुद्धिसावधानतया व्यवहर्त्तव्यं वाक्प्रयोगः कर्त्तव्यः । अवचनीयता प्रयुक्तायावाचोऽनिन्द्यता कुतः, अत्र हेतुमाह यथेति, स्त्रीणामिव वाचां साधुत्वे विषये जनो दुर्ज्जनोभवति स्त्रीरिव साध्वीरपि वाचोनिन्दतीत्यर्थः ।

** सापवादः सनिन्दः दोषाग्राहीत्यर्थः ।

रक्षोगृहे स्थितिर्मूलमग्निशुद्धौत्वनिश्चयः ॥ *

सूत्र । यदि पुनरियं किम्वदन्ती महाराजं प्रति स्यात्त तोऽतिकष्टं † स्यात् ।

नटः । सर्व्वथा ऋषयोदेवताश्च श्रेयोविधास्यन्ति । परिक्रम्य । भो भोः क्वेदानीं महाराजः । आकर्ण्य । एवं जनाः कथयन्ति ।

स्नेहात्सभाजयितुमेत्य दिनान्यमूनि ।
नीत्वोत्सवेन जनकोऽद्य गतोविदेहान् ।
देव्यास्ततोविमनसः परिसान्त्वनाय
धर्म्मासनाद्विशति वासगृहं नरेन्द्रः ॥

इति निष्क्रान्तौ प्रस्तावना । ‡

ततः प्रविशत्यासनोपविष्टोरामः सीता च ।

रामः । देवि ! समाश्वसिहि, न ते हि गुरवश्चिरं शक्नुवन्त्यस्मान् वियोक्तुम् ।

---

* अग्निशुद्धौत्विति तुरप्यर्थे । अनिश्चयः साध्वीत्वसंशयः । यद्वा तु यतः अग्निशुद्धौ विषये अनिश्चयोऽविश्वासः ।

† इयं किंम्वदन्ती सीतापवादविषयकजनश्रुतिः महाराजं प्रति स्यात् महाराजोरामो यदि तां शृणुयादित्यर्थः । अतिकष्टं सीतापरित्यागरूपम् ।

‡ प्रस्तावनात्र प्रयोगातिशयरूपा, यथा यदि प्रयोगएकस्मिन् प्रयोगोऽन्यः प्रयुज्यते । तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदेति दर्पणः । अत्र स्तुतिप्रयोगोयतेन सूत्रधारेण रामस्यान्तःपुरप्रवेशरूपं प्रयोगान्तरं प्रयुञ्जानेन सीतारामयोः प्रवेशः प्रयोजितः ।

किन्त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ *

सीता । जाणामि अज्जउत्त ! जाणामि किन्तु सन्दाव आरिणोबन्धुजणविप्पओआ होन्ति (१) ।

रामः । एवमेतत् एते हि हृदयमर्म्मच्छिदः संसारभावाः येभ्योबीभत्समानाः † सन्त्यज्य सर्व्वान् कामा ‡ नरण्येमनीषिणोविश्राम्यन्ति ।

प्रविश्य कञ्चुकी । रामभद्र ! इत्यर्द्धोक्ते । साशङ्कं । महाराज !

रामः । सस्मितम् । आर्य्य ! ननु रामभद्रइत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य, तद्‌यथाभ्यस्तमभिधीयताम् ।

कञ्चु । देव ऋष्यशृङ्गाश्रमादष्टावक्रः प्राप्तः ।

सीता । अज्ज ! तदो किं विलम्बीअदि (२) ।

रामः । त्वरितं प्रवेशय ।

---

(१) जानाम्यार्य्यपुत्र ! जानामि, किन्तु सन्तापकारिणो बन्धुजन विप्रयोगा भवन्ति ।

(२) आर्य्य ! ततः किं विलम्ब्यते । अविलम्बं तं प्रवेशयेत्यर्थः ।

* अनुष्ठानानां होमादिविधेयकर्म्मणां नित्यत्वं अकरणे प्रत्यवायजनकत्वं कर्तृ स्वातन्त्र्यं स्वेच्छाविहारित्वमपकर्षति निवारयति । अनुष्ठाननित्यत्वादितिपञ्चम्यन्तपाठे अपकर्षति अपकृष्टं भवति स्वल्पं भवतीत्यर्थः । प्रत्यवायैः पदे पदे पापसम्भावनया । सङ्कटा दुर्निर्व्वाहा ।

† बीभत्समानाः संसारभावाच्छिन्दन्तोनिवर्त्तमानाः ।

‡ कामान् विषयान् ।

कञ्चुकी निष्क्रान्तः ।

प्रविश्य अष्टावक्रः । स्वस्ति वाम् ।

रामः । भगवन्नभिवादये, इतश्चास्यताम् ।

सीता । भअवं ! णमोदे, अवि कुसलं सजामातुअस्स गुरुजणस्स अज्जाए सन्ताए अ (१) ।

रामः । निर्व्विघ्नः सोमपीथी,* आवुत्तो † मे भगवानृष्यशृङ्गः आर्य्या च शान्ता ?

सीता । अह्मेवि सुमरेदि ? (२)

अष्टा । उपविश्य । अथ किं ; देवि ! कुलगुरुर्भगवान् वशिष्ठस्त्वामिदमाह ।

विश्वम्भरा भगवती भवतीमसूत,
राजा प्रजापतिसमोजनकः पिता ते ।
तेषां बधूस्त्वमसि नन्दिनि पार्थिवानां,
येषां कुलेषु सविता च गुरुर्व्वयञ्च ॥

तत्किमन्यदाशास्महे, केवलं वीरप्रसवा भूयाः ।

---

(१) भगवन्नमस्ते अपि कुशलं सजामातृकस्य गुरुजनस्य आर्य्यायाः शान्तायाश्च । सजामातुअस्सेत्यत्र समग्गस्सेति क्वचित्पाठः समग्रस्येति सं ।

(२) अस्मानपि स्मरति । अपीति प्रश्ने । अह्मेवि इत्यत्र अह्मे वा इति क्वचित्पाठः ।

* सोमपीथी सोमलतारसपायी कृतसोमयागइत्यर्थः । पातृतुदि विचरिचि सिचिभ्यस्थगिति पिवतेस्थक् ततोऽस्त्यर्थेइन् ।

† आवुत्तो भगिनीपतिः ।

रामः । अनुगृहीताः स्मः ।

लौकिकानां हि साधूनामर्थं वागनुवर्त्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ *

अष्टा । इदञ्च भगवत्याऽरुन्धत्या देवीभिः शान्तया च भूयोभूयः सन्दिष्टं, यः कश्चिद्गर्भदोहदो † भवत्यस्याः सोऽवश्यमचिरात्सम्पादयितव्यइति ।

रामः । क्रियते यद्येषा कथयति ।

अष्टा । ननान्दुः पत्या ‡ च देव्याः सन्दिष्टमृष्यशृङ्गेण ।

वत्से कठोरगर्भेति नानीतासि, वत्सोऽपि रामभद्रस्त्वद्विनोदनार्थमेव स्थापितः । तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्यामीति ।

रामः । सहर्षस्मितम् । तथास्तु । भगवता वशिष्ठेन किमादिष्टोऽस्मि ।

---

* लौकिकानां लोकव्यवहारपराणां साधूनामाप्तानां वाक् व्यर्थं विषयमनुवर्त्तते अनुसरति हि विषयं निश्चित्यैव आप्तावाक्यं प्रयुञ्जतइत्यर्थः अतएवोक्तं नहि वाक्यार्थमज्ञात्वा वाक्यरचनेति । आद्यानामादिकालोत्पन्नानां तपःश्रेष्ठानाम्वा ऋषीणां पुनर्व्वाचमेवार्थोऽनुधावति विषयमनालोच्य प्रयुक्तापि ऋषीणां वाक् निरर्था न भवतीत्यर्थः ।

† गर्भदोहदो गर्भे जाते गर्भिण्या अभिलाषः करकङ्कणवद्गर्भशब्दप्रयोगः पौनरुक्त्यं नावहति । दोहदशब्दस्य दोहदं दैहदं श्रद्धा लालसेति नाममालादौ क्लीवत्वदर्शनेऽपि पुंस्त्वस्यापि बहुषु दर्शनात् हितिकृता ।

‡ ननान्दुर्भर्तृभगिन्याः ।

अष्टा । श्रूयताम् ।

जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवञ्च*राज्यम् ।
युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत् † परमं धनं वः ॥

इति ।

रामः । यथाह भगवान् मैत्रावरुणिः ।

स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि ।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा ॥

सीता । अदोज्जेव राहवकुलधुरन्धरो अज्जउत्तो (१)

रामः । कः कोऽत्र भोः ! विश्राम्यतां भगवानष्टावक्रः ।

अष्टा । उत्थाय परिक्रम्य च । अये ! कुमारलक्ष्मणः प्राप्तः ।

इति निष्क्रान्तः ।

प्रविश्य लक्ष्मणः । जयति जयत्यार्य्यः । आर्य्य ! तेन चित्र-करेणास्मदुपदिष्टमार्य्यस्य चरितमस्यां वीथिकाया ‡ मभिलिखितं, तत् पश्यत्वार्य्यः ।

रामः । जानासि वत्स दुर्मनायमानां देवीं विनोदयितुं । तत्कियन्तमवधिं § यावत् ।

लक्ष्म । यावदार्य्याया हुताशने विशुद्धिम् ।

---

( १ ) अतएव राघवकुलधुरन्धर आर्य्यपुत्रः ।

---

* नवमचिरप्राप्तम् ।

† तस्मात्प्रजारञ्जनात् यद्यशो भवति तदेव वः परममत्यन्तं धनम् ।

‡ वीथिकायां चित्रपटगतपंक्तौ ।

§ अवधिशब्दः सीमार्थकत्वादत्रान्तसीमापरः ।

रामः । शान्तम् ।

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः * ।
तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः ॥

देवि देवयजनसम्भवे ! प्रसीद एष ते जीवितावधिः प्रवादः † ।

कष्टं जनः कुलधनैरनुरञ्जनीय
स्तन्नोयदुक्तमशिवं न हि तत्क्षमं ते ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्द्धि स्थितिर्न चरणैरवताड़नानि ॥ ‡

सीता । भोदु अज्जउत्त ! भोदु, एहि पेक्खह्म दाव दे चरिदं । (१) इत्युत्थाय परिक्रामति ।

(१) भवतु, आर्य्यपुत्र ! भवतु एहि पश्यामस्तावत्ते चरितम् ।

* उत्पत्त्या जन्मनैव परिपूतायाः । पावनान्तरैर्वह्न्यादिभिः ।

† देवयजनसम्भवे यज्ञभूमिसमुत्थिते । प्रसीद मा कुप्य । जीवितावधिर्यावज्जीवनं प्रवादो ऽकृताशनविशुद्धिरूपो ऽपवादः ।

‡ नन्वेषप्रवादो ममासाध्वीत्वशङ्किनस्तवैव वचनाज्जातइति त्वमेवात्र हेतुरित्यत आह कष्टमिति । कुलमेव धनं येषां तैः कुलस्याकलङ्कित्वमिच्छद्भिरित्यर्थः जनो लोकः कष्टमनुरञ्जनीयः साध्वीपरित्यागादिसत्कर्मान्वितत्वविख्यापनया सन्तोषणीयः एतत्कष्टकरमित्यर्थः, तत्तस्माज्जनानुरञ्जनमात्रहेतुत्वात् ते अतिसाध्व्या अपि तव अशिवमप्रियं परगृहावासदूषितां त्वां न ग्रहीष्यामीत्येवंप्रायं यन्नोऽस्माकमुक्तं वचनं तत् नहि नैव क्षमं योग्यम् अयनुचितमित्यर्थः । दृष्टान्तेनेदं द्रढयति नैसर्गिकीत्यादि । नैसर्गिकी स्वभावसिद्धा ।

लक्ष्म । इदन्तावदालेख्यम् ।

सीता । निर्व्वर्ण्य । के एदे उअरि णिरन्तरट्ठिदा उअत्थुवन्ति विअ अज्जउत्तं (१)।

लक्ष्म । देवि! एतानि सरहस्यानि जृम्भकास्त्राणि,यानि भगवतः कृशाश्वात् कौशिकमहर्षिमुपसंक्रान्तानि तेनच ताड़कावधे प्रसादीकृतान्यार्य्यस्य ।

रामः । वन्दस्व देवि ! दिव्यास्त्राणि ।

ब्रह्मादयोब्रह्महिताय तप्त्वा परस्सहस्राः शरदस्तपांसि । *
एतान्यपश्यन् गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥

सीता । णमो णमो एदाणं । (२)

रामः । सर्व्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति ।

सीता । अणुग्गहीदह्मि । (३)

लक्ष्म । एष मिथिलावृत्तान्तः ।

सीता । अह्महे दलन्तणवणीलुप्पलसामलसिणिद्धमसिणसोहमाणमंसलदेहसोहग्गेण विह्मअत्थिमिदतादद्दीसन्त

---

(१) के एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्य्यपुत्रम् ।

(२) नमोनम एतेषाम् । एतेषामिति सम्बन्धविवक्षया षष्ठी । क्वचित् एदेश इत्येव पाठः ।

(३) अनुगृहीतास्मि ।

---

* ब्रह्महिताय तपस्यतां ब्राह्मणानां तपोविघ्ननिवारणरूपहितार्थम् । परस्सहस्राः सहस्राधिकाः शरदोवत्सरान् व्याप्य । पाङ्कतसहस्रयोरिति सुडागमः ।

सुन्दरसिरी अणादरखुडिदसङ्करसरासणो सिहण्डमुद्धमुह मण्डलो अज्जउत्तो आलिहिदो । ( १ )

लक्ष्म । आर्य्ये ! पश्य ।

सम्बन्धिनो * वशिष्ठादीनेष तातस्तवार्चति ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥

रामः । द्रष्टव्यमेतत् ।

जनकानां रघूणाञ्च सम्बन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥

सीता । एदेक्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विश्राहदिक्खिदा तुह्मे, अह्मो जाणामि, तस्सिंज्जेव्व पदेसे तस्सिंज्जेव्व काले वत्तामि । ( २ )

रामः । एवम् ।

---

( १ ) अहो दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमान मांसलदेहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसुन्दरश्रीः अनादरखण्डितशङ्करशरासनः शिखण्डमुग्धमुखमण्डलआर्य्यपुत्र आलिखितः । मसृणेति चिक्कणेत्यर्थः, देहसौभाग्येनेत्युपलक्षणे तृतीया । तातेत्यत्र शाश्ररजणेति क्वचित्पाठः । अनादरेति अव लीलयेत्यर्थः । शिखण्डश्चूडा । शिखण्डोवर्हचूडयोरिति मेदिनी ।

( २ ) । एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारोभ्रातरो विवाहदीक्षिता यूयम् । अहो जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्त्ते । गोदानमङ्गलं विवाहात् प्राक् क्षत्रियाणां गवीदानरूपं माङ्गल्यकर्म । केशच्छेदनमिति केचित् ।

---

* सम्बन्धिनो वैवाहिकसम्बन्धवतः ।

समयः स वर्त्तत इवैष यत्र मां
समनन्दयत् सुमुखि गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण
स्तव मूर्त्तिमानिव महोत्सवः करः

लक्ष्म। इयमार्य्या, इयमप्यार्य्या माण्डवी, इयमपि वधूः श्रुतकीर्त्तिः। †

सीता। वच्छ इअं पि अवरा का। (१)

लक्ष्म। सलज्जस्मितमपवार्य्य। अये उर्म्मिलां ‡ पृच्छत्यार्य्या। भवत्वन्यतः सञ्चारयामि। प्रकाशम्। आर्य्ये दृश्यतां द्रष्टव्यमेतत्। अयञ्च भगवान् भार्गवः।

सीता। ससम्भ्रमं। कम्पिदम्हि। (२)

लक्ष्म। आर्य्ये! पश्य अयमार्य्येण, इत्यर्द्धोक्ते।

रामः। साक्षेपम्। वत्स! बहुतरं द्रष्टव्यमन्यतोदर्शय।

सीता। सस्नेहबहुमानं निर्व्वर्ण्य। सुट्ठु सोहसि अज्जउत्त! एदिणा विणअमाहप्पेण। (३)

लक्ष्म। एते वयमयोध्यां प्राप्ताः।

रामः। सास्रं। स्मरामि हन्त स्मरामि।

(१) वत्स इयमप्यपरा का।

(२) कम्पितास्मि।

(३) सुष्ठु शोभसे आर्य्यपुत्र एतेन विनयमाहात्म्येन। विनय माहात्म्यं परशुरामविजयरूपस्वोत्कर्षप्रकटनशालीनत्वम्।

*गौतमार्पितः शतानन्देन योजितः।

† माण्डवी भरतपत्नी, श्रुतकीर्त्तिः शत्रुघ्नपत्नी।

‡ उर्म्मिला लक्ष्मणस्य पत्नी।

जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां * ते हि नो दिवसा गताः ॥

इयमपि तदा जानकी ।

प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलै †
र्दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम् ।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै
रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः ‡ ॥

लक्ष्म । एषा मन्थरा ।

रामः । अनुत्तरमन्यतो दर्शयन् । देवि वैदेहि ।

इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा ।
निषादपतिना यत्र स्निग्धेनासीत्समागमः ॥

लक्ष्म । विहस्य स्वगतम् । अये मध्यमाम्बावृत्तान्तोऽन्तरित § आर्य्येण ।

सीता । अह्मो एसोजटासंञ्जमणवुत्तन्तो । (१)

लक्ष्म । पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिः कृतम् ।

---

(१) अहो एष जटासंयमनवृत्तान्तः ।

---

* चिन्त्यमानानां सादरमुपलाल्यमानाम् ।

† प्रान्तयोः सविधस्थगण्डभागयोरुन्मीलन्तोलभ्यमानाः कुन्तला अलकायेषां तैः ।

‡ मुग्धालोकं मनोज्ञच्छायम् । ज्योत्स्नाप्रायैर्ज्योत्स्नावद्विशुद्धैरानन्दजनकैर्व्वा । अम्बानामित्यत्र अङ्गानामिति पाठस्तु न मनोरमः ।

§ मध्यमाम्बा कैकेयी तस्यावृत्तान्तोवनवासहेतुर्वरद्वययाचनरूपः ।

धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥

सीता । एसा पसस्सपुस्ससलिला भअवदी भाईरही ।(१)

रामः । देवि रघुकुलदेवते ! नमस्ते ।

तुरगविचयव्यग्रा*नुर्वीभिदः सगराध्वरे
कपिलमहसामर्षात् प्लुष्टान् † पितुः प्रपितामहान् ।
अगणिततनूतापं तप्त्वा तपांसि भगीरथो
भगवति ! तव स्पृष्टानद्भिश्चिरादुददीधरत् ॥

सा त्वमम्ब ! स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भव ।

लक्ष्म । एष भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामोनाम ।

रामः । सस्पृहमालोकयति ।

सीता । सुमरेदि एदं पदेसं अज्जउत्तो । (२)

रामः । अयि कथं विस्मर्य्यते ।

अलसलुलितमुग्धान्यध्वसञ्जातखेदा
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्ब्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥

लक्ष्म । एष विन्ध्याटवीमुखे विराधसंवादः ।

---

(१) एषा प्रसन्नपुण्यसलिला भगवती भागीरथी ।

(२) स्मरत्येतं प्रदेशमार्य्यपुत्रः ।

---

* तुरगविचयव्यग्रान् आश्वमेधिकाश्वान्वेषणतत्परान् ।

† अमर्षात् कपिलं प्रति क्रोधं प्रकाश्य तस्य महसा प्लुष्टान् दग्धान् ।

सीता । अलं दाव एदिणा, पेक्खामि दाव अज्ज उत्तहत्थधरिदतालवेण्टादवत्तं अत्तणोदक्खिणारण्णवेसा रम्भं । (१)

रामः । एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रमतरूणि * तपोवनानि ।
येष्वातिथेयपरमाः † शमिनोभजन्ते
नीवारमुष्टिपचनागृहिणोगृहाणि ॥

लक्ष्म । अयमविरलानोकहनिवह ‡ निरन्तरस्निग्ध नीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः § सन्तत-मभिष्यन्दमानमेघमेदुरितनीलिमा ¶ जनस्थानमध्यगोगिरिः प्रस्रवणो नाम ।

रामः । स्मरसि सुतनु तस्मिन् पर्व्वते लक्ष्मणेन
प्रतिविहितसपर्य्यासुस्थयोस्तान्यहानि ।

---

(१) अलं तावदेतेन, पश्यामि तावदार्य्यपुत्रहस्तधृततालवृन्तातपत्रमात्मनोदक्षिणारण्यप्रवेशारम्भम् । अत्र अत्तणा इति पाठस्तु न मनोरमः ।

---

* वैखानसाश्रमतरूणीत्यत्र वैखानसाश्रिततरूणीति क्वचित्पाठः ।

† आतिथेयमतिथिकर्म्म अतिथिसेवेत्यर्थः तदेव परममतिकर्त्तव्यं येषां ते ।

‡ अनोकहनिवहो वृक्षसमूहः ।

§ गोदावरीस्रोतसा सशब्दगुहः ।

¶ सन्ततमभिष्यन्दमानः प्रकाशमानो मेघस्येव मेदुरिता निविडः स्निग्धो वा नीलिमा यस्य सः ।

स्मरसि सुरसनीरां * तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्त्तनानि † ॥
अपि च । किमपि किमपि मन्दं मन्दमासक्तियोगा
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिल ‡ परिरम्भव्यापृतैकैकदोष्णो
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥

लक्ष्म । एषा पञ्चवट्यां शूर्पणखा ।

सीता । हा अज्जउत्त ! एत्तिअं ज्जेव दंसणं । (१)

रामः । अयि विप्रयोगत्रस्ते ! चित्रमेतत् ।

सीता । जधा तधा भोदु, दुज्जणो असुहं उप्पादेदि (२) ।

रामः । हन्त वर्त्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति ।

लक्ष्म । अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा चालितमपि § ।

---

(१) हा आर्य्यपुत्र ! एतावदेव दर्शनम् । शूर्पणखाकृतव्यवहारादितः परं त्वां चिरं न द्रक्ष्यामीत्यर्थः ।

(२) यथा तथा भवतु, दुर्ज्जनोऽसुखमुत्पादयति । यथातथेति समयस्तात्त्विकोऽवित्यर्थः । असुखमिति संप्रत्यपि तस्य संभविष्यादिति भावः ।

---

* सुरसनीरामित्यत्र सरस्वतीरामिति क्वचित्पाठः ।

† वर्त्तनानि अवस्थानानि ।

‡ अशिथिलेत्यत्र सपुलकेति क्वचित्पाठः ।

§ चालितमपि प्रतिहतमपि ।

जनस्थाने शून्ये विकलकरणै * रार्य्यचरितै
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ *

सीता । सास्रम् । अइ देव रङ्उलाणन्द ! एव्वं बि मम-कारणादो किलिन्तो आसी । (१)

लक्ष्म । रामं निर्व्वर्ण्य साकूतम् । आर्य्य ! किमेतत् ।

अयन्ते वाष्पौघस्त्रुटितइव मुक्तामणिसरो
विसर्पन् धाराभिर्लुठति धरणीं जर्ज्जरकणः ।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति विरसाध्मातहृदयः † ॥

रामः । वत्स ! तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विमोढः ।

---

(१) अयि देव रघुकुलानन्द ! एवमपि मम कारणात् क्लान्त आसीः ।

---

* शून्ये निर्लोके । विकलानि व्याकुलानि करणानीन्द्रियाणि येभ्यस्तैः । क्वचित्करुणविकलैरित्येव पाठः । करुणानि कारुण्य व्यञ्जकानि विकलानि स्वभावच्युतानिच तैरित्यर्थः । ग्रावा पाषाणः । रोदिति रुदितवान् आशंसायां लट् एवं दलतीत्यत्रापि । अचेतनानां दुःखवर्णनया का कथा चेतनानामित्यर्थापत्तिं प्रयोजयति ।

† मुक्तामणिसरो मुक्ताहारः । धरणीं विसर्पन्नित्यन्वयः । आवेगो व्याकुलत्वम् । उन्नेयोऽनुमेयः । विरसो दुःखं तेनाध्मात मुत्तापितं हृदयं यस्य सः । भवति च भराध्मातहृदयेति पाठे भरेण उद्रेकेणाध्मातहृदयः ।

दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां करोति ॥ *

सीता । हद्धी हद्धी अज्ज अहंवि अदिभूमिं गदेण रणरणएण अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि (१)

लक्ष्म । स्वगतं । भवत्वन्यतः क्षिपामि । चित्रमवलोक्य प्रकाशम् ।

अथैतन्मन्वन्तरपुराणस्य गृध्रराजस्य तत्रभवतस्तातजटायुषश्चरित्रविक्रमोदाहरणम् † ।

सीता । हा तात ! णिव्वूढो दे अपच्चसिणेहो । (२)

रामः । हा तात काश्यप शकुन्तराज ! क्व पुनस्त्वादृशस्य महतस्तीर्थस्य ‡ साधोः सम्भवः ।

लक्ष्म । अयमसौ जनस्थानपश्चिमतश्चित्रकुञ्जवान्नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभूभागः, तदिदमृष्यमूकपर्व्वते मतङ्गस्याश्रमपदम्, इयञ्च श्रमणा नाम सिद्धशवरी, तदेतत्पम्पाभिधानं सरः ।

---

(१) हा धिक् हा धिक् अद्याहमपि अतिभूमिं गतेन रणरणकेन आर्य्यपुत्रशून्यमिवात्मानं पश्यामि । अतिभूमिं वृद्धिम् । रणरणकेन चिन्तया ।

(२) हा तात ! निर्व्व्यूढस्ते अपत्यस्नेहः ।

---

* प्रतिकृतिवाञ्छया प्रतिकारेच्छया तत्कालं तस्मिन् काले विसोढः, पुनः संप्रति विपच्यमानः पुनः पुनः स्मरणेन विपाकं गच्छन् ।

† चरित्रस्य विक्रमस्य तयोरुदाहरणं निदर्शनम् ।

‡ महतस्तीर्थस्य गङ्गादिमहातीर्थवत्परेषां पावकस्य ।

सीता। जत्थ किल अज्जउत्तेण विच्छड्डिदामरिसाधीणं पमुत्तकण्ठं रुदिअं आसी ?। (१)

रामः। देवि ! रमणीयमेतत्पम्पासरः।

एतस्मिन् मदकलमल्लिकाख्य * पक्ष
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः।
वाष्पाम्भःपरिपतनोद्गमान्तराले †
संदृष्टाः कुवलयिनो भुवोविभागाः॥

लक्ष्म। अयमार्य्यो हनूमान्।

सीता। एसो सो चिरणिव्विणजीअलोअपच्चुद्धरण-गुरुओवआरी महाणुभाओ मारुदी। (२)

रामः। दिष्ट्या सोऽयं महावाहुरञ्जनानन्दवर्द्धनः।
यस्य वीर्य्येण कृतिनो वयञ्च भुवनानिच ‡॥

(१) यत्र किलार्य्यपुत्रेण विच्छर्दितामर्षाधीनं प्रमुक्तकण्ठं रुदितमासीत्। विच्छर्दितउद्रेकं गतोयोऽमर्षः अपहर्त्तारं प्रति क्रोधस्तस्याधीनं यथा स्यात्तथेत्यर्थः।

(२) एष स चिरनिर्व्विणजीवलोकप्रत्युद्धरणगुरुकोपकारी महानुभावो मारुतिः। चिरं निर्विणाद्दुःखितोयोजीवलोकोऽस्मद्विधस्तस्य प्रत्युद्धरणं दुःखान्मोचनं तद्रूपोगुरुकोमहान् यउपकारस्तद्वानित्यर्थः।

(*) मल्लिकाख्याः मलिनचञ्चुचरणकराजहंसविशेषाः। मल्लिनैर्मल्लिकाख्यास्ते इत्यमरः।

† वाष्पाम्भसां परिपतनञ्च, उद्गमः पुनःपतनोपक्रमश्च तयोरन्तराले मध्ये, तदानीमेव दर्शनसम्भवादिति भावः।

‡ भुवनानि च कृतीनि कुशलवन्ति।

सीता । वच्छ ! एसो कुसुमिदकअम्बतरुतण्डविदवरहिणो किणामधेओ गिरी । जत्थ अणुभावसोहग्गमेत्तपरिसेसधूसरसिरी मुच्छन्तं मुच्छन्तो तुए परुदिएण अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो । (१)

लक्ष्म । सोऽयं शैलः ककुभसुरभि*र्माल्यवान्नाम यस्मिन्
नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।

रामः । वत्सैतस्माद्विरम विरमातः परं न क्षमोऽस्मि †
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः ॥

लक्ष्म । अतः परमार्य्यस्य तत्रभवतां कपिराक्षसानाञ्चासंख्यातान्युत्तरोत्तराणि कर्म्माश्चर्य्याणि, ‡ परिश्रान्ता चेयमार्य्या तद्विज्ञापयामि विश्राम्यतामिति ।

सीता । अज्जउत्त ! एदेण चित्तदंसणेण पच्चुप्पणदोहदाए अत्थि मे विण्णप्पं । (२) ।

---

(१) वत्स एष कुसुमितकदम्बतरुताण्डवितबर्हिणः किं नामधेयो गिरिः । यत्रानुभावसौभाग्यमात्रपरिशेषधूसरश्रीर्मुर्च्छन्तं मूर्च्छन् त्वया प्ररुदितेनावलम्बिततरुतले आर्य्यपुत्र आलिखितः । अनुभावः प्रभावः सौभाग्यं लावण्यञ्च तन्मात्रस्य परिशेषो यत्र सा धूसरामलिना च श्रीर्यस्य सः ।

(२) । आर्य्यपुत्र ! एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया अस्ति विज्ञाप्यम् । प्रत्युत्पन्नदोहदायाः सञ्जाताभिलाषायाः ।

---

* ककुभसुरभिरर्ज्जुनवृक्षपुष्पैर्गन्धवान् ।

† एतस्मात् मद्वियोगोद्दीपकमाल्यवद्दर्शनात् । न क्षमोऽस्मीति द्रष्टुमिति शेषः ।

‡ कर्म्माश्चर्य्याणि — वालिवधसमुद्रबन्धनाद्यद्भुतकर्म्माणि ।

रामः। नन्वाज्ञापय।

सीता। जाणे पुणोवि पसन्नगम्भीरासु वणराइसु विहरिस्सं, पवित्तणिम्मलसिसिरावगाहाञ्च भअवदीं भाईरहीं अवगाहिस्सं। (१)।

रामः। वत्स लक्ष्मण!

लक्ष्म। एषोऽस्मि।

रामः। अचिरं सम्पादनीयोऽस्यादोहद इति, संप्रत्येव गुरुभिः संदिष्टं तदस्खलितसुखसम्पातं रथमुपस्थापय।

सीता। अज्जउत्त! तुम्हेहिंपि तहिं गन्तव्वं। (२)

रामः। अयि कठिनहृदये! एतदपि वक्तव्यमेव। *

सीता। तेणहि पिअं मे। (३)

लक्ष्म। यथाज्ञापयत्यार्य्य इति निष्क्रान्तः।

रामः। प्रिये वातायनोपकण्ठे मुहूर्त्तं संविष्टौ † भवावः।

सीता। एव्वं भोदु, ओहरिस्सामि क्खु परिस्समजणिदाए णिद्दाए। (४)।

(१) जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि, पवित्रनिर्म्मलशिशिरावगाहाञ्च भगवतीं भागीरथीमवगाहिष्ये। जाने मनसि चिन्तयामि। प्रसन्नाः स्निग्धा अपि गम्भीरा दुरवगाहास्तासु।

(२) आर्य्यपुत्र! युष्माभिरपि तत्र गन्तव्यम्।

(३) तेन हि प्रियं मे।

(४) एवं भवतु, अपक्रिये खलु परिश्रमजनितया निद्रया। परिश्रमोऽत्र गर्भभारजनितः।

* वक्तव्यमेवेति किमिति शेषः।

† संविष्टौ शयानौ।

रामः । तेनहि निरन्तर*मवलम्बस्व मामत्र शयनाय ।

जीवयन्निव ससाध्वसश्रमस्वेदविन्दु† रधिकण्ठमर्प्यताम् ।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥

तथा कारयन् सानन्दं । प्रिये किमेतत् ।

विनिश्चेतुं शक्योन सुखमिति वा दुःखमिति वा
प्रमोहोनिद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च संमीलयति च ॥ ‡ ॥

सीता । विहस्य । थिरप्पसादा तुह्मे, इदोदाणिं किमवरं । (१)

रामः ।

म्लानस्य जीवकुसुमस्य विकाशनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।

---

(१) स्थिरप्रसादा यूयम् इत इदानीं किमपरम् । स्थिरप्रसादा इति मयि प्रसन्नो भूत्वा विनिश्चेतुमित्यादि कथयसीत्यर्थः । इत इत्यादि अस्मादपरं किं सौभाग्यमाकाङ्क्षणीयमित्यर्थः ।

---

* निरन्तरमव्यवधानं गाढमित्यर्थः ।

† साध्वसं चित्रलिखितशूर्पणखादिवृत्तान्तस्य भविष्यत्त्वशङ्कया विरहसम्भावनयोत्पन्नत्रासः, श्रमोगर्भभारखेदस्ताभ्यां जातैः स्वेदविन्दुभिः सहितः ।

‡ शक्य इति विकारस्य विशेषणत्वात पुंस्त्वं शक्यमिति पाठः मनोरमः । मदो मद्योपयोगजः सम्मोहानन्दसम्भेदः । भ्रमयति अस्थिरत्वं नयति सम्मीलयति विलोपयति समन्मीलयतीतिपाठे, अ स्थिरत्वं नयतीत्यर्थः ।

एतानि ते सुवचनानि सरोरुहाक्षि *
कर्णामृतानि मनसश्च रसायनानि ॥ † ॥

सीता । पिअंवद एहि संविसह्म । (१)

इति शयनाय समन्ततो निरूपयति ।

रामः । किमन्वेष्टव्यम् । ‡

आविवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुनः ।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते ॥

सीता । निद्रां नाटयन्ती । अत्थि एदं अज्जउत्त अत्थि एदं । ( २ ) इति स्वपिति ।

रामः । कथं प्रियवचना वक्षसि प्रसुप्तैव । निर्व्वर्ण्य सस्नेहम् ।

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः §
किमस्या न प्रेयो, यदि ¶ परमसह्यस्तु विरहः ॥

---

( १ ) प्रियंवद एहि संविशामः । संविशामः शयनं कुर्म्मः ।
(२) अस्तीदमार्य्यपुत्र अस्तीदम् ।

---

* एतानि तानि वचनानि सरोरुहाक्ष्या इति क्वचित् पाठः ।

† रसायनानि पुष्टिकरौषधविशेषाः ।

‡ किम् उपधानादिकमन्वेष्टव्यं त्वयान्विष्यते । अपि संवेष्टव्य मितिपाठस्तु न रुचिरः ।

¶ शिशिरः शीतलोमसृणोऽकठिनश्च । मसृणोऽकठिने स्निग्धे इति हेमः । मौक्तिकसरो मुक्ताहारः ।

§ यदीति सम्भावनायम् ।

प्रविश्य प्रतीहारी । देव उअत्थिदो (१)

रामः । अये कः ।

प्रती । आसण्णपरिचारओ देवस्स दुम्मुहो । (२)

रामः । स्वगतम् । शुद्धान्तचारी दुर्मुखः, स मया पौरजानपदानपसर्पितुं * प्रयुक्तः । प्रकाशम् । आगच्छतु ।

प्रतीहारी निष्क्रान्ता ।

प्रविश्य दुर्मुखः । स्वगतम् । हा कधं सीदादेईए ईदिसं अचिन्तणिज्जं जणाववादं देवस्स कधइस्सं, अहवा णिओओ क्खु ईदिसो मन्दभाअस्स । (३)

सीता । उत्स्वप्नायते । हा अज्जउत्त ! कहिं सि (४) ।

रामः । अये सैवेयं रणरणकदायिनी † चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्वेगं करोति ।

सस्नेहमङ्गमस्याः परामृशन् ।

---

(१) देव उपस्थितः ।

(२) आसन्नपरिचारको देवस्य दुर्मुखः ।

(३) हा कथं सीतादेव्या ईदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्यामि, अथवा नियोगः खल्वीदृशो मन्दभागस्य ।

(४) हा आर्य्यपुत्र कुत्रासि ।

---

* पौरजानपदान् पुरवासिनो जनपदवासिनश्च जनान् अपसर्पितुं चरितुं चरोभूत्वा अनुरक्तापरक्तान् पौरजानपदान् ज्ञातुमित्यर्थः । अपसर्पश्चरः स्पश इत्यमरः । पौरजानपदे सञ्चारी प्रहित इति क्वचित्पाठः ।

† सैवेयमित्यत्र ममैवेति क्वचित्पाठः । रणरणकदायिनी चिन्ताकारिणी । चिन्ता रणरणस्तद्ददातीति त्रिकाण्डम् ।

अद्वैतं सुखदुःखयोरनुगुणं सर्व्वास्ववस्थासु यद्,
विश्रामो हृदयस्य यत्र, जरसा यस्मिन्नहार्य्यो रसः ।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत् प्राप्यते ॥ *

दुर्मु । उपसृत्य । जअदि जअदि देओ । (१)

रामः । ब्रूहि यदुपलब्धम् ।

दुर्मु । उवत्थुअन्ति देअं पोरजाणवदा, विसुमरिदा अह्मो महाराअदसरहस्स रामदेएणत्ति । (२)

रामः । अर्थवाद † एषः, दोषन्तु मे कञ्चित् कथय, येन स प्रतिविधीयेत ।

दुर्मु । सास्रं । सुणादु देओ । (३) कर्णे एवमेवम् ।

रामः । अहह ! तीव्रसंवेगोवाग्वज्र इति मूर्च्छति ।

---

(१) जयति जयति देवः ।

(२) उपस्तुवन्ति देवं पौरजानपदाः विस्मारिता वयं महाराजदशरथस्य रामदेवेनेति । दशरथस्येति स्मृधातुयोगे कर्म्मणि षष्ठी ।

(३) शृणोतु देवः ।

---

* अद्वैतमेकरूपम् । अनुगुणमनुकूलं । रसोऽनुरागः । आवरणं सौजन्याभावं तस्यात्ययाभावात् । भद्रं करणान्तरं । भद्रन्तु मङ्गले । मुस्तकश्रेष्ठयोः साधौ काञ्चने करणान्तरे इति हेम । करणान्तरञ्च क्रियाभेदः, क्रियाभेदे स्त्रियञ्चैभकायसंवेशनेषु चेतिकरणपर्य्याये मेदिनी । एकं हि एकमपि ।

† अर्थवादः स्तुतिः ।

दुर्मु । आश्वसदु देवो । (१)

रामः । आश्वस्य ।

हाहा धिक् परगृहवासदूषणं यद्
वैदेह्याः प्रशमितमद्भुतैरुपायैः*
एतत्तत्पुनरपि दैवदुर्व्विपाका
दालर्कं† विषमिव सर्व्वतः प्रसृतम् ॥

तत्किमत्र मन्दभाग्यः करोमि । विमृश्य सकरुणम् । अथवा किमन्यत् ।

सतां केनापि कार्य्येण‡ लोकस्याराधनं व्रतम् ।
यत्पूरितं हि तातेन माञ्च प्राणांश्च मुञ्चता ॥

संप्रत्येव भगवता वशिष्ठेन सन्दिष्टम् । §

अपिच ।

यत्सावित्रै¶ र्दीपितं भूमिपालै
र्लोकश्रेष्ठैः साधु शुद्धं चरित्रम् ।
मत्सम्बन्धात्कश्मला किंवदन्ती**
स्याच्चेदस्मिन् हन्त धिङ्मामधन्यम् ॥

हा देवि देवयजनसम्भवे ! हा स्वजन्मानुग्रहपवित्रीकृत

(१) आश्वसितु देवः ।

* उपायैर्वह्निप्रवेशादिभिः ।

† आलर्कमुन्मत्तकुक्कुरसम्बन्धि ।

‡ केनापि कार्य्येण प्रियतमवस्तुपरित्यागादिनापि ।

§ वशिष्ठेन सन्दिष्टमिति युक्ताः प्रजानामनुरञ्जने स्या इत्यादिना ।

¶ सावित्रैः सूर्य्यवंशीयैः ।

** कश्मला निन्दिता किंवदन्ती जनश्रुतिः ।

वसुन्धरे! हा जनकवंशनन्दिनि! हा पावकवशिष्ठारुन्धती प्रशस्तशीलशालिनि! हा रामैकजीविते! * हा महारण्यवास प्रियसखि! हा तातप्रिये! हा लोकप्रियवादिनि! कथ मेवंविधायास्तवायमीदृशः परिणामः।

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे॥

दुर्मुखं प्रति। दुर्मुख ब्रूहि लक्ष्मणम्, एष ते नूतनो राजा रामः समाज्ञापयति। कर्णे एवमेवम्।

दुर्मु। कधं दाणीं अग्गिपरिसुद्धाए गब्भपरिप्फुडिद पवित्तरघुउलसन्ताणाए देवीए दुज्जणवअणादो एव्वं अण ज्जं अज्झवसिदं देवेण। (१)

रामः। शान्तं। कथं दुर्ज्जनाः पौरजानपदाः।

इक्ष्वाकुवंशोऽभिमतः प्रजानां, जातञ्च दैवाद्वचनीयवीजम्।
यच्चाद्भुतं कर्म्म विशुद्धिकाले प्रत्येतु कस्तद्भुवि दूरवृत्तम् †॥

तद्गच्छ।

---

(१) कथमिदानीमग्निपरिशुद्धाया गर्भपरिस्फुटितपवित्ररघुकुलसन्तानायादेव्या दुर्ज्जनवचनादेवमनार्य्यमध्यवसितं देवेन।

---

* रामैकजीविते इत्यत्र राममयजीविते इति कचित्पाठः।

† अभिमतोऽभीष्टतया परिगृहीतः न तु विद्वेषविषयतया इक्ष्वाकुवंशविद्वेषान्नैवं निन्दन्तीत्यर्थः। इक्ष्वाकुवंशोद्भवत इति पाठस्तु न सम्यक्। तर्हि कथं निन्दाया अवकाश इत्याह दैवादिति, वचनीयस्य निन्दायावीजं कारणं परगृहीतसीतायाः पुनरादानरूपं। दूरवृत्तं दूरवर्त्तिन्यां लङ्कायां जातम्।

दुर्मु । हा देइ । (१) इति निष्क्रान्तः ।

रामः । हा कष्टमतिबीभत्सकर्म्मा * नृशंसोऽस्मि संवृत्तः ।

शैशवात् प्रभृति पोषितां प्रियां † सौहृदादपृथगाश्रयामिमाम् ।
छद्मना परिददामि मृत्यवे, सौनिको गृहशकुन्तिकामिव ॥ ‡ ॥

तत्किमित्यस्पर्शनीयः पातकी देवीं दूषयामि । सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन् ।

अपूर्व्वकर्म्मचाण्डालमयि मुग्धे ! विमुञ्च माम् ॥
श्रितासि चन्दनभ्रान्त्या दुर्व्विपाकं § विषद्रुमम् ॥

उत्थाय । हन्त विपर्य्यस्तः ¶ संप्रति जीवलोकः, अद्य पर्य्यवसितं ** जीवितप्रयोजनं रामस्य, शून्यमधुना जीर्णारण्यं जगत्, असारः संसारः, कष्टप्रायं †† शरीरम् । अशरणोऽस्मि, किं करोमि, का गतिः, क्व गच्छामि, अथवा,

---

(१) हा देवि !

---

* अतिबीभत्सकर्म्मा अतिनिन्दितक्रियः । अतिभीमकर्म्मेति क्वचित्पाठः ।

† प्रियामित्यत्र प्रियैरिति पाठान्तरं, प्रियैरशनादिभिरित्यर्थः । एवमपृथगाश्रयामित्यत्र अपृथगाशयामिति, इमामित्यत्र प्रिया मिति च ।

‡ सौनिकः पशुपक्ष्यादिमांसविक्रयकर्त्ता । गृहशकुन्तिकां स्वगृहपालितपक्षिणीम् ।

§ दुर्व्विपाकं परिणामदारुणम् ।

¶ विपर्य्यस्तः वैपरीत्यं प्राप्तः ।

** पर्य्यवसितं समाप्तम् ।

†† कष्टप्रायं क्लेशबहुलम् ।

दुःखसंवेदनायैव रामे चैतन्यमर्पितम् । *
मर्म्मोपघातिभिः प्राणैर्वज्रकीलायितं स्थिरैः † ॥

हा अम्ब अरुन्धति ! हा भगवन्तौ वशिष्ठविश्वामित्रौ ! हा भगवन् पावक ! हा देवि भूतधात्रि ! हा तात जनक ! हा तात ! हा मातरः ! हा प्रियसख महाराज सुग्रीव ! हा सौम्य हनूमन् ! हा परमोपकारिन् लङ्काधिपते विभीषण ! हा सखि त्रिजटे ! दूषिताः स्थः ‡ परिभूताः स्थः, रामहतकेन । अथवा कोनामाहमेतेषामाक्रान्ते § ।

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना ।
मया गृहीतनामानः स्पृश्यन्तइव पाप्मना ॥

योऽहं । ९५A९४

विस्रम्भादुरसि निपत्य लब्धनिद्रा
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम् ।
आतङ्क ¶ स्फुरितकठोरगर्भगुर्व्वीं
क्रव्याद्भ्यो वलिमिव निर्घृणः ** क्षिपामि ॥

---

* दुःखसंवेदनायैव केवलं दुःखानुभवार्थं, चैतन्यमिति अन र्पिते चैतन्ये काष्ठकुड्यादीनामिव दुःखानुभवोन स्यादिति भावः । अर्पितमिति विधात्रेति शेषः ।

† स्थिरैः सद्भिः वज्रकीलायितं दृढतरशङ्कुवदाचरितं । स्थिरैरित्यत्र हृदीति क्वचित्पाठः ।

‡ दूषिताइत्यत्र मुषिताइति क्वचित्पाठः वञ्चिताइत्यर्थः ।

§ कोनामाहमिति पातकित्वादनधिकारीत्यर्थः ।

¶ आतङ्कोऽत्र स्वप्नानुभूतरामपरित्यागजनितभयम् ।

** निर्घृणोनिर्दयः । दारुण इति कचित्पाठः ।

सीतायाः पादौ शिरसि कृत्वा । देवि देवि ! अयं पश्चि-
म * स्ते रामस्य शिरसि पादपङ्कजस्पर्श इति रोदिति ।

नेपथ्ये । अब्रह्मण्यमब्रह्मण्यम् † ।

रामः । ज्ञायतां भोः किमेतत् ।

पुनर्नेपथ्ये ।

ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ।
लवणत्रासितः स्तोम ‡ स्त्रातारं त्वामुपस्थितः ॥

रामः । आः कथमद्यापि राक्षसत्रासः, तद्यावदस्य दुरा-
त्मनः कुम्भीनसीपुत्रस्य समुन्मूलनाय शत्रुघ्नं प्रेषयामि ।

कतिचित्पदानि गत्वा, पुनः प्रतिनिवृत्त्य । हा देवि !
कथमेवंविधा § गमिष्यसि । भगवति वसुन्धरे ! श्लाघ्यां दुहि-
तरमवेक्षस्व जानकीम् ।

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम् ।
यां देवयजने ¶ पुण्ये पुण्यशीलामजीजनः ॥

इति निष्क्रान्तः ।

सीता । हा सोम्म अज्जउत्त ! कहिंसि । सहसो-
त्थाय । हद्धी हद्धी दुस्सिविणरणरणअविप्पलद्धाहं अज्जउत्तं
आक्कन्दामि । हद्धी हद्धी कधं एआइणीं मं परिसुत्तं उज्झिअ
अज्जउत्तो गदो, ता किं दाणीं एदं, भोदु, कुविस्सं ।

---

* पश्चिमस्त्वरमः इतः परं पुनर्नभविष्यतीत्यर्थः ।

† अब्रह्मण्यमवध्योक्तिः । प्रहृते लवणेन ऋषयोऽवध्या न भव-
न्तीत्यर्थः ।

‡ स्तोमः समूहः ।

§ एवंविधा अपूरणा ।

¶ देवयजने यज्ञभूमौ ।

जइ तं पेक्खन्ती अत्तणोपहविस्सं। कोएत्थ परिअणो । (१)॥

प्रविश्य दुर्मुखः । देइ ! कुमारलक्खणो विसवेदि, सज्जो रहो आरुहदु देइत्ति । (२) ॥

सीता । इअमहं आरुहह्मि । उत्थाय परिक्रम्य । परिप्फुरदि विअ मे गब्भभारो, ता सणिअं गच्छह्म । (३) ॥

दुर्मु । इदो इदो देइ । (४) ॥

सीता । णमो णमो तवोधणाणं, णमोणमो रऊउलदेवदाणं, णमोणमो अज्जउत्तचरणकमलाणं, णमोणमो सअलगुरुअणाणं । (५) ॥

इति निष्क्रान्ताः सर्व्वे ।

इति चित्रदर्शनोनाम प्रथमोऽङ्कः । १ ॥

---

(१) हा सौम्य आर्य्यपुत्र ! कुत्रासि । हाधिक् हाधिक् दुःखप्ररणरणकविप्रलब्धाहमार्य्यपुत्रमाक्रन्दामि । हाधिक हाधिक् एकाकिनीं मां परिसुप्तामुज्झित्वार्य्यपुत्रोगतस्तत् किमिदानीमिदं, भवतु कोपिष्यामि यदितं प्रेक्षमाणा आत्मनः प्रभविष्यामि कोऽत्र परिजनः ।

(२) देवि ! कुमारलक्ष्मणो विज्ञापयति, सज्जोरथः, आरोहतु देवीति ।

(३) इयमहमारोहामि । परिस्फुरतीव मे गर्भभारः, तत् शनैर्गच्छामः ।

(४) इतइतोदेवी ।

(५) नमोनमस्तपोधनानां नमोनमोरघुकुलदेवतानां नमोनमः आर्य्यपुत्रचरणकमलानां नमोनमः सकलगुरुजनानाम् । अत्र क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् नमोयोगे चतुर्थीं बाधित्वा षष्ठी ।

अथ

द्वितीयोऽङ्कः।

नेपथ्ये। स्वागतं तपोधनायाः।

प्रविश्य। अध्वगवेशा तापसी। अये वनदेवतेयं फलकुसुम-पल्लवार्घ्येण मामुपतिष्ठते।

प्रविश्य। वनदेवता। अर्घ्यं विकीर्य्य।

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति।
तरुच्छाया तोयं यदपि तपसोयोग्यमशनं
फलं वा मूलं वा, तदपि न पराधीन * मिह वः॥

ताप। किमत्रोच्यते।

प्रियप्राया वृत्ति,र्विनयमधुरोवाचि नियमः,
प्रकृत्या कल्याणी मति,रनवगीतः परिचयः।
पुरोवा पश्चाद्वा तदिदमविपर्य्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते। † ॥

इत्युपविशतः।

---

* नपराधीनमिति। आत्मीयमिति मत्वा भोक्तव्यमित्यर्थः।

† वृत्तिः क्रियासु प्रवृत्तिः प्रियप्राया जनप्रीतिकरी। वृत्तिर्विवर-णीवकौशिक्यादिप्रवर्त्तने इति मेदिनी। वाचि वाक्प्रयोगे नि-यमः सावधानता अनर्थकवाक्प्रयोगवैमुख्यमित्यर्थः। कल्याणी मंगलकारी। अनवगीतोऽनिन्दितः शुभोदर्क इत्यर्थः। अविपर्य्यासितरसमप्रच्युतानुरागम्। रहस्यं गूढचरित्रम्। अनुपधि अकपटम्।

वन। कां पुनरत्रभवतीमवगच्छामि?।

ताप। आत्रेय्यस्मि।

वन। आत्रेयि! कुतः पुनरिहागम्यते, किं प्रयोजनं वा दण्डकारण्यप्रवेशे?।

आत्रेयी।

अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदो * वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां † वाल्मीकिपार्श्वादिह पर्य्यटामि॥

वन। यदि तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतस ‡ मृषिं ब्रह्मपारायणायो § पासते, तत् कोऽयमत्रार्य्याया दीर्घप्रवासप्रयासः।

आत्रे। तत्र महानध्ययनप्रत्यूह इति दीर्घप्रवासोऽङ्गीकृतः।

वन। कीदृशः।

आत्रे। तस्य भगवतः केनापि देवताविशेषेण सर्व्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्त्तमानं दारकद्वयमुपनीतं, तत् खलु न केवलमृषीणामपितु सचराचराणां भूतानामान्तराणि तत्त्वान्युपस्नेहयति। ¶॥

---

* उद्गीथविदः सामवेदविशेषज्ञाः।

† निगमान्तविद्यां वेदान्तविद्याम्।

‡ प्राचेतसं वाल्मीकिम्।

§ ब्रह्मपारायणाय वेदाध्ययनाय।

¶ आन्तराणि तत्त्वान्यन्तःकरणानि। उपस्नेहयति प्रीणयति

वन । अयि * तयोर्नामसंविज्ञानमस्ति ?

आत्रे । तयैव किलदेवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः ।

वन । कीदृशः प्रभावः ? ।

आत्रे । तयोः किल सरहस्यजृम्भकास्त्राण्याजन्मसिद्धानीति ।

वन । अहो नु भोश्चित्रमेतत् ।

आत्रे । तौ च भगवता वाल्मीकिना धात्रीकर्मवत्सलतां† परिगृह्य पोषितौ, परिरक्षितौ च, वृत्तचौडकर्मणोश्च तयोस्त्रयीवर्ज्जमितराविद्याः सावधानेन परिनिष्ठापिताः, समनन्तरञ्च गर्भैकादशे वर्षे चात्रेण कल्पेनोपनीय ‡ तौ त्रयीविद्यामध्यापितौ, न ह्येताभ्यामतिप्रदीप्तप्रज्ञाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति ।

यतः

वितरति गुरुः प्राज्ञे विद्यां यथैव, तथा जड़े,
नतु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति च पुनर्भूयान् भेदः फलं प्रति, तद्यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः § ॥

वन । अयमसावध्ययनविघ्नः ?

---

* अयीत्यत्र अपीति क्वचित्पाठः ।

† धात्रीकर्म्मणि पालनादौ वत्सलतां प्रणयित्वम् ।

‡ गर्भैकादशे इति गर्भादेकादशे राजन्य इति मनूक्तेः । त्रेण विधिना, उपनीय उपनयनाख्यसंस्कारेण संस्कार्य्य ।

§ शुचिर्निर्म्मलः । बिम्बोद्ग्राहे प्रतिबिम्बग्रहणे । मृदां चयः ।ावादिकम् ।

आत्रे। अपरञ्च।

वन। अथापरः कः?

आत्रे। अथ स ब्रह्मर्षिरेकदा मध्यन्दिनसमये नदीं तमसामनुप्रपन्नः, तत्र युग्मचारिणोः क्रौञ्चयो * रेकं व्याधेन विध्यमानं ददर्श, आकस्मिकप्रत्यवभासाञ्च † देवीं वाचमानुष्टुभेन ‡ च्छन्दसा परिणतामभ्युदैरयत्।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः §
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥ इति।

वन। चित्रमाम्नायादन्योऽयं नूतनश्छन्दसामवतारः ¶।

आत्रे। तेन खलु पुनः समयेन ** तं भगवन्तमाविर्भूतशब्दब्रह्मप्रकाशमृषिमुपसंगम्य भगवान् भूतभावनः पद्मयोनिरवोचत्, ऋषे! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि, तद्ब्रूहि ††

* युग्मचारिणोर्मिथुनीभूय चरतोः क्रौञ्चयोर्वकयोः।

† आकस्मिकप्रत्यवभासाम् अकस्मात् स्वयं प्रकाशमानाम्।

‡ आनुष्टुभेनेति स्वार्थे टण्।

§ शाश्वतीर्बह्वीः, समाः संवत्सरान् व्याप्य।

¶ आम्नायात् वेदविलसितच्छन्दसः। वस्तुतस्तु वेदेऽप्यनुष्टुप्छन्दोवद्धानि वाक्यानि दृश्यन्ते तदत्र अन्यइत्यत्र अन्यत्रेति समग्रपाठः सम्यक्, आम्नायाद्वेदादन्यत्र पौरुषेयग्रन्थेषु नूतनोऽयं छन्दसामवतारइत्यन्वयः, मन्वादिसंहितास्तु तत्पश्चाद्भूगुप्रभृतिनिबद्धाः, यद्वा आम्नायपदेन आम्नायार्थप्रतिपादकत्वात्तासामपि ग्रहणमिति न विरोधइति ध्येयम्।

** समयेनेति क्रियोपरमे व्याप्यर्थे तृतीया।

†† ब्रूहि वर्णय।

रामचरितम्, अव्याहतज्योतिरार्षं * ते चक्षुः प्रतिभातु, आद्यः कविरसीत्युक्त्वान्तर्हितः। अथ भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्त्त † मितिहासं रामायणं प्रणिनाय ।

वन । हन्त तर्हि पण्डितः ‡ संसारः ।

आत्रे । तस्मादवोचं, तत्र महानध्ययनप्रत्यूहइति ।

वन । युज्यते ।

आत्रे । विश्रान्तास्मि,भद्रे ! संप्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि ।

वन । इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरी तीरेण ।

आत्रे । सवाष्पा। अप्येतत्तपोवनम् ? अप्येषा पञ्चवटी ? अपि सरिदियं गोदावरी ? अप्ययं गिरिः प्रस्रवणः ? अपि वनदेवता जनस्थानवासिनी वासन्ती त्वम् ?

वास । अस्त्येतत् सर्व्वम् ।

आत्रे । वत्से जानकि !

। एष ते वल्लभबन्धुवर्गः प्रासङ्गिकीनां विषयः कथानाम् § ।
त्वां नामशेषामपि दृश्यमानः ¶ प्रत्यक्षदृश्यामिव नः करोति ॥

---

* आर्षं ज्ञानमयम् ।

† विवर्त्तं परिणामम् ।

‡ पण्डितइति नानेतिहासात्मकस्य रामायणस्यानुशीलना इति भावः । मण्डित इति क्वचित्पाठः ।

§ प्रासङ्गिकीनामिति प्रथमं कथाप्रसङ्गेन स्मरणपथमवतीर्णः ।

¶ दृश्यमानः पश्चात् प्रत्यभिज्ञाविषयः ।

वास। सभयं स्वगतं। कथं नामशेषामित्याह। प्रकाशम्। आर्य्ये! किमत्याहितं * सीतादेव्याः?।

आत्रे। न केवलमत्याहितं सापवादमपि।

वास। कथमिव।

आत्रे। कर्णे एवमेवम्।

वास। अहह! दारुणोदैवनिर्घातइति मूर्च्छति।

आत्रे। भद्रे! समाश्वसिहि समाश्वसिहि।

वास। हा प्रियसखि! हा महाभागे! ईदृशस्ते निर्म्माणभागः। रामभद्र रामभद्र! अथवा अलं त्वया, आर्य्ये आत्रेयि! अथ तस्मादरण्यात् परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किंवृत्तमिति काचिदस्ति प्रवृत्तिः?। †

आत्रे। नहि नहि।

वास। हा कष्टमार्य्यारुन्धतीवशिष्ठाधिष्ठिते रघुकुलगृहे, जीवन्तीषु च प्रवृद्धराज्ञीषु ‡ कथमिदं जातम्?।

आत्रे। ऋष्यशृङ्गस्यत्रे गुरुजनस्तदासीत्। संप्रति परिसमाप्तं तद्द्वादशवार्षिकं सत्रम्, ऋष्यशृङ्गेण च संपूज्य विसर्ज्जितागुरवः, ततो भगवत्यरुन्धती नाहं वधूविरहितामयोध्यां गमिष्यामीत्याह, तदेव राममातृभिरनुमोदितं। तदनुरोधाद्भगवतोवशिष्ठस्य परिशुद्धावाचो, यथा वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति।

---

* अत्याहितममङ्गलम्।

† प्रवृत्तिर्वार्त्ता।

‡ प्रवृद्धराज्ञीष्वित्यत्र अनित्यत्वात् समासान्ताभावः।

वास । अथ स राजा किमारब्धः संप्रति ?

आत्रे । तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः ।

वास । अहह ! धिक् परिणीतमपि * ।

आत्रे । शान्तं पापम् ।

वास । का तर्हि यज्ञे सहधर्मचारिणी ?

आत्रे । हिरण्मयी सीताप्रतिकृतिः ।

वास । हन्त भोः ।

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥

आत्रे । विसृष्टश्च वामदेवानुमन्त्रितो मेध्योऽश्वः, उपकल्पिताश्च यथाशास्त्रं तस्य रक्षितारः, तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्रकेतुर्दत्तदिव्यास्त्रसंप्रदायश्चतुरङ्गसाधनान्वितो † ऽनुप्रहितः ।

वास । सस्नेहकौतुकास्रं । कुमारलक्ष्मणस्यापि पुत्रः, हन्त मातर्जीवामि ‡ ।

आत्रे । अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे, सोरस्ताडनमब्रह्मण्यमुद्घोषितं ततो न राजापराधमन्तरेण प्रजास्वकालमृत्युश्चरतीत्यात्मदोषं निरूपयति करुणामये रामभद्रे, सहसैवाशरीरिणी वागुदचरत् ।

---

* अहहेत्यादि अश्वमेधयज्ञे सपत्नीकस्यैवाधिकारादिति भावः, परिणीतमिति भावे क्तः ।

† चतुरङ्गसाधनानि हस्त्यश्वरथपादातरूपसैन्यानि । हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमित्यमरः ।

‡ हन्तेति हर्षे, जीवामीति प्रशस्तजीवनवती भवामीत्यर्थः ।

शम्बूकोनाम वृषलः पृथिव्यां तप्यते तपः ।
शीर्षच्छेद्यः * स ते राम तं हत्वा जीवय द्विजम् ॥

इत्युपश्रुत्यैव कृपाणपाणिः पुष्पकं विमानमारुह्य सर्व्वा दिशोविदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः सञ्चरितुमारब्धवान् ।

वास । शम्बूकोनाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति, तदपि नाम † रामभद्रः पुनरपीदं वनमलंकुर्य्यात् ।

आत्रे । भद्रे गम्यतेऽधुना ।

वास । एवमस्तु, कठोरीभूतोऽयं दिवसः ।

तथाहि

कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि
र्घर्म्मस्रंसितवन्धनैः स्वकुसुमैरर्च्चन्ति गोदावरीम् ।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥

इति परिक्रम्य निष्क्रान्ते ।

विष्कम्भकः ।

---

* शीर्षं मस्तकावच्छेदे छेद्यः, शीर्षं छेद्यं यस्येति वा ।

† अपिनामेति सम्भावनायाम् ।

‡ छायेत्यादि छायायामपस्किरमाणाभक्ष्यार्थं चरणैश्च विलिखन्तो ये विष्किराः पक्षिणस्तेषां मुखैर्व्याकृष्टावहिर्निःसारिताः कीटायाश्चत्वादृश्यन्तवोवल्कलानि येषां ते, अपात् किरस्ततुव्यात् पक्षिहर्षादौ सुट्च छ्रयपीत्यात्मनेपदं सुट्च, नगौकोवाजिविकिरविविष्किरपतत्रय इत्यमरः । तथा कूजन्ति क्लान्तानां कपोतानां कुक्कुटानाञ्च कुलानि यत्र ते । कुलायद्रुमाः पक्षिणामावासवृक्षाः ।

ततः प्रविशति सदयोद्यतखड्गो रामभद्रः ।

रामः । रे हस्त दक्षिण ! मृतस्य शिशोर्द्विजस्य
जीवातवे * विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि दुर्वहगर्भखिन्न-
सीताविवासनपटोः, करुणा कुतस्ते ॥

अथ कथञ्चित् प्रहृत्य । कृतं रामसदृशं कर्म्म, अपि जीवेत् स ब्राह्मणशिशुः? ।

प्रविश्य दिव्यपुरुषः । जयति जयति देवः ।
दत्ताभये त्वयि यमादपि दण्डधारे †
सञ्जीवितः शिशुरयं, मम चेयमृद्धिः ‡ ।
शम्बूक एष शिरसा चरणौ नतस्ते,
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥

रामः । द्वयमपि प्रियं नः, तदनुभूयतामुग्रस्य तपसः परिपाकः ।
यत्रानन्दाश्च, मोदाश्च, यत्र पुण्याश्च संपदः ।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते ध्रुवाः ॥ §

---

* जीवातवे जीविताय । जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे इति मेदिनी ।

† यमादपि दत्ताभये त्वयि दण्डधारे मयि, दण्डं कुर्व्वति सति ।

‡ ऋद्धिर्दिव्यशरीरप्राप्तिरूपा ॥

§ आनन्दाश्च मोदाश्चेति आनन्दनामकामोदनामकाश्च सत्यसर्व्वविशेषा इत्यर्थः । पुण्याभिसम्भवा इति पाठस्तु द्वितीयपादेनान्वितत्वान्न सम्यक् । तैजसास्तेजोमयाः नतु पार्थिवादयः अनित्याः, शिवा इति क्वचित् पाठः ।

शम्बू । युष्मतपादप्रसादोपायएषमहिमा, किमत्र तपसा । अथवा । महदुपकृतं तपसा ।

अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि ।
क्रान्त्वा प्राप्तः स इह तपसां संप्रसादो,ऽन्यथा चेत्
कायोध्यायाः पुनरुपगमोदण्डकायां वने वः ॥

रामः । किं नाम दण्डकेयं ? । सर्व्वतोऽवलोक्य । आं,

स्निग्धश्यामाः क्वचिदपरतोभीषणाभोगरूक्षाः, *
स्थाने स्थाने मुखरककुभो † झाङ्कृतैर्निर्झराणाम् ।
एते तीर्थाश्रमगिरिसरिद्गर्त्तकान्तार ‡ मिश्राः
संदृश्यन्ते परिचितभुवोदण्डकारण्यभागाः ॥

शम्बू । दण्डकैवेय,मत्र किल निवसता देवेन,

चतुर्दश सहस्राणि रक्षसां भीमकर्म्मणाम् ।
त्रयश्च दूषणखरत्रिमूर्द्धानोरणे हताः ॥

येन सिद्धक्षेत्रेऽस्मिन् जनस्थाने मादृशानामपि भीरुजानपदानामकुतोभयः § सञ्चारोजातः ।

रामः । न केवलं दण्डकेयं, जनस्थानमपि ।

शम्बू । वाढमेतानि खलु सर्व्वभूतलोमहर्षणान्युन्मत्त

---

* अपरतोऽन्यत्र भीषणेन आभोगेन विस्तारेण रूक्षा दुर्दर्शाः ।

† मुखरककुभः सशब्ददिशः ।

‡ कान्तारो दुर्गमवर्त्म महारण्यं वा ।

§ येन राक्षसहननेन । भीरवोजानपदा जनपदवासिनस्तेषां । नास्ति कुतः कस्मादपि भयं यत्र सः ।

चण्डश्वापदकुलसङ्कुलगिरिगह्वराणि जनस्थानपर्य्यन्तानि * दीर्घारण्यानि दक्षिणां दिशमभिवर्त्तन्ते

तथाहि।

निष्कूजस्तिमिताः क्वचित्, क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो, यास्वयं
तृष्यद्भिः प्रतिसूर्य्यकैरजगरस्वेदद्रवः पीयते ॥ †

रामः। पश्यामि च जनस्थानं भूतपूर्व्वखरालयम्।
प्रत्यक्षानिव वृत्तान्तान् पूर्व्वाननुभवामि च ॥

सर्व्वतोऽवलोक्य। सर्व्वथा प्रियारामाहि ‡ वैदेह्यासीत्, एतानि तानि § नाम कान्ताराणि किमितः परं भयानकं ¶ स्यात्। सास्रम्।

---

* जनस्थानं पर्य्यन्तः प्रान्तसीमा येषां तानि।

† क्वचिन्निष्कूजस्तिमिताः निःशब्दतया गम्भीराः। तथा क्वचिदपि प्रोच्चण्डाविकटाः सत्त्वानां जन्तूनां स्वनाः शब्दायत्र ताः। स्वेच्छया सुप्तास्तथा गभीरोनिम्नोभोगः शरीरं येषां तादृशा ये भुजगास्तेषां श्वासैः श्वासेषु वा प्रदीप्ता अग्नयोयत्र ताः। तथा प्रदरोदरेषु भूविदारमध्येषु विलसत् स्वल्पमम्भोयासु ताः। यासु सीमसु। तृष्यद्भिः पिपासुभिः प्रतिसूर्य्यकैः कृकलासैः। स्यादृ दारः क्वचपात् कृकलासस्तृणाञ्जनः। प्रतिसूर्य्य इति त्रिकाण्डशेषः।

‡ प्रियारामा प्रियवनवासा। अत्रारामशब्दोवनमात्रपरः

§ तानि प्रियया सहितेन मया पूर्व्वमध्युषितानि।

¶ किमितः परं भयानकमिति प्रियायाः स्मारणेन वियोगदुःखोद्दीपनादितिभावः।

त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु।
इति त्वा रमते सीता * स्नेहस्तस्याः स तादृशः॥ †
अकिञ्चिदपि कुर्व्वाणः सौख्यैर्दुःखान्यपोहति ‡।
तत्तस्य किमपि § द्रव्यं योहि यस्य प्रियोजनः॥

अम्ब्। तदलमेभिर्दुरासदैः। अथैतानि मदकलमयूर कण्ठकोमलच्छविभिरवकीर्णानि पर्यन्तै,रविरलनिविष्टनील वहलच्छायतरुणतरुषण्डमण्डितान्यसम्भ्रान्तविविधमृगयूथानि पश्यतु महानुभावः प्रशान्तगभीराणि मध्यमारण्यकानि।

इह समदशकुन्ताक्रान्तवानीरवीरुत्
प्रसवसुरभिशीतस्वच्छतोया वहन्ति।
फलभरपरिणामश्यामजम्बूनिकुञ्ज
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः॥

अपिच।

---

* इति अभिप्रेत्य त्वा खेदे सीता रमते अरमतेत्यर्थः। अत्र इति चारमतीवासाविति इत्यारमयतीवासावित्यादीनि पाठान्तराणि दृश्यन्ते।

† तादृशः मत्सान्निध्यसुखप्रयोजकः स पूर्व्वानुभूतः स्नेहो मय्यासीदिति शेषः, वस्तुतस्तु स इत्यत्र क्व इति पाठः सम्यक्।

‡ अकिञ्चिदपि कुर्व्वाणः किञ्चित् प्रीतिकरं कर्म्माकुर्व्वन्नपि कवीनां निरङ्कुशत्वादत्र गमकताभ्युपेया। सौख्यैः स्वसान्निध्यमात्रेण सुखधाराजननैः दुःखान्यपोहति निवारयति प्रियजनइति शेषः।

§ किमपि लोकोत्तरम्।

दधति कुहरभाजामत्र भल्लूकयूना
मनुरसितगुरूणि स्त्यानमम्बूकृतानि । *
शिशिरकटुकषायः स्त्यायते † शल्लकीना
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥

रामः । सवाष्पस्तम्भं । शिवास्ते पन्थानो, देवयानं प्रतिपद्यस्व पुण्येभ्योलोकेभ्यः ।

शम्बू । यावत् पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि । इति निष्क्रान्तः ।

रामः । एतत्तदेव हि वनं पुनरद्य दृष्टं,
यस्मिन्नभूम चिरमेव पुरा वसन्तः ।
आरण्यकाश्च गृहिणश्च रताः स्वधर्म्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥ ‡

अपिच ।

एते तएव गिरयोविरुवन्मयूरा
स्तान्येव मत्तहरिणानि वनस्थलानि ।

---

* भल्लूकयूनां तरुणभल्लूकानाम्, अनुरसितगुरूणि अनुध्वनिना गभीराणि, अम्बूकृतानि सनिष्ठीवनमुखारावाः, स्त्यानं स्फीतिं दधति धारयन्ति ।

† शिशिरः शीतलः, कटुस्तग्रः, कषायः सुरभिश्च । स्त्यायते स्फीतिं गच्छति सर्व्वत्र प्रसरतीत्यर्थः ।

‡ यस्मिन् पुरा चिरमेव वसन्तोवयं स्वधर्म्मे शास्त्रनियोचितनित्यनैमित्तिकादिकर्म्मानुष्ठाने रताः सन्त आरण्यकाः अरण्यवासिमुनयः, तथा सांसारिकेषु सुखेषु विषयोपभोगसुखेषु रसज्ञाः रसज्ञाः गृहिणश्च अभूमेत्यन्वयः ।

आमञ्जुवञ्जुललतानि च * तान्यमूनि
नीरन्ध्रनीलनिचुलानि † सरित्तटानि ॥
मेघमालेव यश्चायमारादपि ‡ विभाव्यते ।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी ॥
अस्यैवासीन्महति शिखरे गृध्रराजस्य वास
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु ।
गोदावर्य्याः पयसि विततश्यामलानोकहश्री
रन्तःकूजन्मुखरशकुनो यत्र रम्यो वनान्तः ॥

आ, तदत्रैव सा पञ्चवटी, यत्रातिचिरनिवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः § प्रदेशाः, प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता प्रतिवसति, तत् किमिदमापतितमद्य रामस्य, । संप्रति हि ॥

चिरोद्वेगारम्भी प्रसृतइव तीव्रो विषरसः
कुतश्चित् संवेगान्निहितइव शल्यस्य शकलः । ¶

---

* आमञ्जुवञ्जुललतानीत्यत्र आमत्तमञ्जुलरुतानीति क्वचित्पाठः ।

† नीरन्ध्रा अविरला नीलाः श्यामलाश्च निचुला इज्जलवृक्षा यत्र तानि, नीलेत्यत्र नीपेति क्वचित्पाठः ।

‡ यश्चायमारादपीत्यत्र यच्छाया दूरादेवेति पाठान्तरम् ।

§ विविधो यो विस्रम्भातिप्रसङ्गो निःशङ्कविहारोत्कर्षस्तस्य साक्षिणः सूचकाः ।

¶ संवेगात् सम्यग्वेगेन क्रियमाणव्यापारात् निहितोऽङ्गेषु प्रविष्टः, कर्त्तरि क्तः । यद्वा संवेगात् क्रियमाणेन व्यापारविशेषेणार्पितः । निहित इत्यत्र प्रबल इति पाठस्तु न मनोरमः ।

अणोरुद्धग्रन्थिः स्फुटितइव हृन्मर्मणि * पुन
र्घनीभूतः शोकोविकलयति संमूर्च्छयति च † ॥

तथापि तान् पूर्व्वसुहृदो भूमिभागान् पश्यामि, । निरूप्य
अहो अनवस्थितो ‡ भूमिसन्निवेशः । तथाहि ।

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्य्यासं यातोघनविरलभावः § क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति ¶ बुद्धिं द्रढ़यति ॥

हन्त परिहरन्तमपि मामितः पञ्चवटीस्नेहो बलादपक-
र्षतीव । सकरुणम् ।

यस्यान्ते दिवसास्तया सह मया नीतायथा स्वे गृहे
यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयते ।
एकः संप्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा,गच्छत्वसम्भाव्य ** वा ॥

प्रविश्य । शम्बूकः । जयति देवः । देव, भगवानगस्त्यो
मत्तः श्रुतसन्निधानस्त्वामाह, परिकल्पितविमानावतरण

---

* हृन्मर्म्मणि हृदयरूपमर्म्मस्थाने रुद्धग्रन्थिः सञ्जातबन्धः ।

† संमूर्च्छयति चेत्यत्र, मां नूतन इवेति क्वचित्पाठः ।

‡ अनवस्थितोऽस्थिरः ।

§ विपर्य्यासमिति घनभावोविरलभावं यातः, विरलभावो घनभावं यात इत्यर्थः ।

¶ तदिदमितीति शैलानां प्रायेण ताद्रूप्याव्यभिचारादिति भावः ।

** असम्भाव्य सम्मानमकृत्वा आनादिना असम्मान्य ।

मङ्गला * प्रतीचते वत्सला लोपामुद्रा, सर्व्वे च महर्षय, स्तदेहि सम्भावयास्मान्, अथ प्रजविना पुष्पकेण स्वदेशमुपसंगम्य अश्वमेधाय सज्जीभविष्यसीति ।

रामः । यथाज्ञापयति भगवान् ।

शम्बू । इतस्तर्हि देवः प्रवर्त्तयतु पुष्पकम् ।

रामः । भगवति पञ्चवटि ! गुरुजनोपरोधात् चणं चम्यतामतिक्रमो रामस्य ।

शम्बू । देव पश्य पश्य ।

कूजत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः ।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु कुम्भीनसाः ॥ †

---

* विमानतोऽवतरणे यन्मङ्गलं मङ्गलाचरणवस्तु दूर्व्वागुग्गुलुप्रभृतिकं तत्परिकल्पितं यया सा ।

† कूजदित्यादि, कूजन्ती या कुञ्जरूपकुटीरवर्त्तिनी कौशिक घटा पेचकसमूहस्तस्य घुत्कारः घुद्घुदित्यव्यक्तशब्दस्तद्वान् यः कीचकस्तम्बाडम्बरः सस्वनवंशगुच्छविस्तारस्तेन मूकं कौशिकभयेन निःशब्दं मौकुलिकुलं काकसमूहो यत्र सः । एकदृग्बलिभुग्ध्वाङ्क्षो मौकुलिर्वायसोऽन्यभृदिति हेमचन्द्रः । मौकुलीत्यत्र मौकवीति पाठस्तु न सम्यक् । प्रचलाकिनां मयूराणां । प्रचलाकी शिखापाङ्गशिखावलगलप्रताहति त्रिकाण्डशेषः । उद्वेल्लन्ति ऊर्द्धं आकुञ्चन्ति । चन्दनेयत्र रोहिणीति क्वचित्पाठः । कुम्भीनसाः क्रूरसर्पाः । कुम्भीनसः क्रूरसर्पे स्त्रियां लवणमातरीति मेदिनी ।

अपिच ।

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दक्षिणाः ।
अन्योऽन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्तइमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥

इति निष्क्रान्ताः सर्व्वे ।

इति पञ्चवटीप्रवेशोनाम
द्वितीयोऽङ्कः ।



## अथ तृतीयोऽङ्कः ।

॥ ततः प्रविशति नदीद्वयं तमसा मुरला च ॥

तमसा । सखि मुरले ! किमसि सम्भ्रान्तेव ?

मुरला । भगवति तमसे ! प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुं, जानास्येव यथा वधूत्यागात् प्रभृति,

अनिर्भिन्नोगभीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणोरसः ॥ *

तेन च तथाविधेष्टजनकष्टपातजन्मना प्रकर्षगतेन दीर्घशोकसन्तानेन † संप्रत्यतितरां परिक्षीणोरामभद्रः, तमव-

---

* गभीरत्वादप्रतर्क्याशयत्वादनिर्भिन्नः अप्रकाशितः । अनिर्भिन्नगभीरत्वादित्येकपदन्तु न सम्यक् । अतएवान्तर्मध्ये गूढा प्रच्छन्ना घना निविडा व्यथा यत्र सः । अतएव पुटे आवरणेन नीरन्ध्रपात्रे यः पाकस्तत्प्रतीकाशस्तत्सदृशः, करुणः करुणविप्रलम्भः नतु करुणाख्यः, वीरश्रृङ्गार्य्यन्यतरस्यैव नायकस्य नाटकप्रकृतित्वात् प्रबन्धस्यास्य च नाटकत्वात् । रसोऽत्र विप्रलम्भरत्याख्यः स्थायिभावः ।

† तथाविधः प्राणप्रतिमोय इष्टजनः सीतारूपस्तस्मिन् यः कष्टपातोनिर्जनारण्यप्रवेशादिस्तस्माज्जन्म उद्दीप्तिर्यस्य तेन, प्रकर्षगतेन परां काष्ठामधिरूढेन, तथा दीर्घः शोकसन्तानः शोकाख्यव्यभिचारिभावधारा यत्र तेन, दीर्घशोकसन्तापेनेति क्वचित् पाठः । ईदृशेन तेन करुणविप्रलम्भेन ॥

ले। कथं कम्पितमिव मे हृदयम्, अधुना च प्रतिनिवर्त्तमानेन रामभद्रेण नियतमेव पञ्चवटीवने वधूसहनिवासविस्रम्भ-साक्षिणः * प्रदेशाद्रष्टव्याः, तेषु च निसर्गधीरस्याप्येवंविधायामवस्थायामतिगम्भीराभोगशोकक्षोभसंवेगात् पदे पदे महान्ति प्रमादस्थानानि शङ्कनीयानि रामभद्रस्य, † तद्भगवति गोदावरि ! तत्र त्वया सावधानया भवितव्यम्,

वीचीवातैः शीकरक्षोदशीतैराकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं स्वैरं स्वैरं प्रेषितैस्तर्पयेति ॥

तम। उचितमेव दाक्षिण्यं स्नेहस्य, ‡ सञ्जीवनोपायस्तु मौलिक § एव रामभद्रस्यात्र सन्निहितः ।

मुर। कथमिव ?

तम। श्रूयताम्। पुरा किल वाल्मीकितपोवनोपकण्ठात् परित्यज्य गते लक्ष्मणे, सीतादेवी प्राप्तप्रसववेदनात्मानमतिदुःखसंवेगाद्गङ्गाप्रवाहे निक्षिप्तवती, तदैव तत्र दारकद्वयं

---

* बध्वा सह निवासेन योविस्रम्भः प्रणयः, सहनिवासेन बध्वां यः प्रणयोवा तस्य साक्षिणः स्मारकाः । विस्रम्भः केलिकलहोवा । विस्रम्भः केलिकलहे विश्वासे प्रणयेऽपिचेति मेदिनी ।

† तेषु च प्रदेशेषु अतिगम्भीरः कथमप्यप्रतिकार्य्य आभोगः संपूर्णता यस्य तादृशोयः शोकस्तेन यः क्षोभस्तस्य संवेगउद्रेकस्तस्मात्, प्रमादोऽसावधानता मनसोदौर्ब्बल्यं वा तस्य स्थानानि उत्पत्तिभूमयः शङ्कनीयानि रामस्य मोहजनकत्वेन चिन्तनीयानि । तेषु चेत्यत्र तानि चेति क्वचित्पाठः तद्रूपाणि प्रमादस्थानानीत्यर्थः ।

‡ स्नेहस्य दाक्षिण्यं स्नेहेन प्रियजनं प्रत्यानुकूल्यम् ।

§ मौलिकः प्रथमं निरूपितः ।

प्रसूता * भगवतीभ्यां पृथ्वीभागीरथीभ्यामभ्युपपन्ना † रसातलञ्च नीता, स्तन्यत्यागात् परेण च तद्दारकद्वयं तस्याः, प्राचेतसस्य महर्षेर्गङ्गादेवी स्वयमर्पितवती ।

मुर । सविस्मयम्,

ईदृशानां विपाकोऽपि जायते परमाद्भुतः ।
यत्रोपकरणीभावमायात्येवंविधो जनः ॥ ‡

तम । इदानीन्तु शम्बूकवृत्तान्तेनानेन सम्भावितजनस्थानगमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी, यदेव लोपामुद्रया स्नेहादाशङ्कितं तदेवाशङ्क्य सीतासमेता । केनचिदिव गृहाचारव्यपदेशेन गोदावरीं विलोकयितुमागता ।

मुर । सुविचिन्तितं भगवत्या, राजधानीस्थितस्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्य्यैर्व्यापृतस्य नियताश्चित्तविक्षेपाः, अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ इति, तत्कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात् ।

तम । उक्तमेव भगवत्या भागीरथीदेव्या, वत्से देवयजनसम्भवे सीते, अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशजन्मसंवत्सरस्य संख्यामङ्गलग्रन्थि ¶ रभिवर्त्तते, तदात्मनः पुराणश्वशुरमेता-

---

* प्रसूतेति कर्त्तरि क्तः गुणीभूतगत्यर्थकत्वात् सूङ्धातोः ।

† अभ्युपपन्ना स्नातानुकूल्या सुरक्षितेत्यर्थः ।

‡ उपकरणीभावमानुकूल्यम् । एवंविधोजनः गङ्गादेवी प्रभृतिरतिमहान् जनः ।

¶ संख्यामङ्गलग्रन्थिरिति वर्षसमसंख्यकग्रन्थिमद्गुग्गुलुनिम्बश्वेतसर्षपदूर्व्वागोरोचनाद्यमङ्गलवस्तुसहितसूत्रधारणविधिरित्यर्थः ।

वर्त्तमानेवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व, न च त्वामवनिपृष्ठवर्त्तिनीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति, किं पुनर्मर्त्त्या इति, अहञ्च आपिता, तमसे ! त्वयि प्रकृष्टप्रेमैव बधूर्वत्सा जानकीति, अतस्त्वमेवास्याः प्रत्यनन्तरीभवेति, * साहमधुना यथादिष्टमनुतिष्ठामि।

मुर। अहमप्येनं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि, रामभद्रोऽप्यागतएवेति तर्कयामि।

तम। तदियं गोदावरीह्रदान्निष्क्रम्य।

परिपाण्डुदुर्ब्बलकपोलसुन्दरं
दधती विलोलकवरीकमाननम्।
करुणस्य † मूर्त्ति,रथवा शरीरिणी
विरहव्यथेव वनमेति जानकी॥

मुर। इयं हि सा।

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं ‡
हृदयकुसुमशोषी § दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिजइव घर्म्मः केतकीगर्भपत्रम्॥

इति परिक्रम्य निष्क्रान्ते। विष्कम्भकः।

---

* प्रत्यनन्तरीभव सन्निहिता भव।

† करुणस्य करुणविप्रलम्भस्य।

‡ बन्धनाद्विप्रलूनं वृन्ताच्छिन्नम्।

§ शोषीत्यत्र शोषीति पाठस्तु न सम्यक्।

ततः प्रविशति पुष्पावचयव्यग्रहस्ता सकरुणौत्सुक्यमाकर्ण-यन्ती सीता।

सीता। अह्माहे, जाणामि पिअसही मे वासन्दी वाहरदि (१)।

नेपथ्ये।

सीतादेव्याः स्वकरकलितैः शल्लकीपल्लवाग्रै
रग्रे लोलः करिकरभकोयः पुरा पोषितोऽभूत्।

सीता। किं तस्स। (२)

पुनर्नेपथ्ये।

बध्वा सार्द्धं पयसि विहरन् सोऽयमन्येन वेगा
दुद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः *॥

सीता। ससम्भ्रमं कतिचित्पदानि गत्वा। अज्जउत्त! परित्ताहि परित्ताहि मम तं पुत्तअं। विचिन्त्य। हद्धी हद्धी ताइं ज्जेव चिरपरिचिदाइं अक्खराइं पञ्चवटीदंसणेण मं मन्दभाइणीं अणुबन्धन्ति, हा अज्जउत्त! इति मूर्च्छति। (३)

---

(१) अहो, जानामि प्रियसखी मे वासन्ती व्याहरति।

(२) किं तस्य।

(३) आर्य्यपुत्र! परित्रायस्व परित्रायस्व मम तं पुत्रकम्। हा धिक् हा धिक् तान्येव चिरपरिचितान्यक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनुबध्नन्ति, हा आर्य्यपुत्र!। अनुबध्नन्ति प्राप्नुवन्ति।

---

* अभियुक्तः परिभवायाक्रान्तः।

प्रविश्य तमसा । वत्से समाश्वसिहि समाश्वसिहि ।

नेपथ्ये । विमानराज अत्रैव स्थीयताम् ।

सीता । समास्सस्थ समाध्वसीत्कम्पोलासं । अह्मे जलभ

रिदमेहत्थणिदगम्भीरमंसला कुदोणु एसा भारदी? णिग्घो

सभरन्तकण्णविवरं मंपि मन्दभाइणीं झत्ति उस्सावेदि । (१)

तम । सस्मितास्रम् । अयि वत्से !

किमप्यङ्केऽसि निनदे कुतस्त्ये *ऽपि त्वमीदृशी ।

स्तनयित्नो † र्मयूरीव चकितोत्कण्ठिता स्थिता ॥

सीता । भअवदि ! किं भणासि अपरिप्फुडत्ति, मए उण

सरसंजोएण पच्चभिआणिदं, अज्जउत्तो ज्जेव वाहरदि । (२)

तम । श्रूयते, तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वा-

कोराजा जनस्थानमागतइति ।

सीता । दिट्ठिआ अपरिहीणराअधम्मो क्खु सो राआ । (३)

नेपथ्ये ।

यत्र द्रुमा अपि मृगा अपि बन्धवो मे

यानि प्रियासहचरश्चिरमध्यवात्सम् ।

---

(१) अहो, जलभृतमेघस्तनितगम्भीरमांसला कुतोनु एषा भारती, निर्घोषभ्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटित्युच्छ्वासयति ।

(२) भगवति ! किं भणसि अपरिस्फुटेति । मया पुनः स्वरसंयोगेन प्रत्यभिज्ञातम्, आर्य्यपुत्रएव व्याहरति ।

(३) दिष्ट्या अपरिहीनराजधर्म्मः खलु स राजा ।

---

* कुतस्त्ये कुतोभवे अनिश्चितोपादाने इत्यर्थः ।

† स्तनयित्नोर्मेघस्य ।

एतानि तानि बहुनिर्झरकन्दराणि
गोदावरीपरिसरस्य ‡ गिरेस्तटानि ॥

सीता। दृष्ट्वा। हा कधं पभादचन्दमण्डलावण्डरपरिक्खामदुब्बलेण आआरेण,अअं सोम्मगम्भीराणुभावमेत्तपच्चभिआणिदो अज्जउत्तोज्जेव,ता मं धारेहि। (१)

इति तमसामाश्लिष्य मूर्च्छति।

तम। धारयन्ती। वत्से! समाश्वसिहि समाश्वसिहि।

नेपथ्ये।

अनेन पञ्चवटीदर्शनेन।

अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः।
उत्पीड़ * इव धूमस्य मोहः प्रागावृणोति माम्॥

हा प्रिये जानकि!

तम। स्वगतम। इदं तदाशङ्कितं गुरुजनेनापि।

सीता। समाश्वस्य। हा कधं एदं। (२)

पुनर्नेपथ्ये। हा देवि दण्डकारण्यवासप्रियसखि विदेहराजपुत्रि! इति मूर्च्छति।

सीता। हद्धी हद्धी मं मन्दभाइणीं उद्दिसिअ आमीलन्त

(१) हा कथं प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामदुर्ब्बलेनाकारेण अयं सौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञातआर्य्यपुत्र एव तन्मां धारय। आकारेणेत्युपलक्षणे तृतीया।

(२) हा कथमिदम्।

‡ गोदावरी परिसरे यस्य सतथा तस्य।

* उत्पीडः समूहः।

णेत्तणीलुप्पलो मुच्छिदो ज्जेव, हाहा कधं धरणीवट्ठे णिरुस्साहणीसहं विपल्हत्थो, भअवदि तमसे ! परित्ताआहि परित्ताआहि जीवावेहि अज्जउत्तं । (१) इति पादयोः पतति ।

तमसा । त्वमेव ननु कल्याणि ! सञ्जीवय जगत्पतिम् ।
प्रियस्पर्शो हि पाणिस्ते यत्रैष निरतो जनः * ॥

सीता । जं भोदु तं भोदु, जधा भअवदी भणादि । (२)

ससम्भ्रमं निष्क्रान्ता ।

ततः प्रविशति भूमौ निपतितः साम्रया सीतया स्पृश्यमानः साह्लादोच्छ्वासो रामभद्रः ।

सीता । किञ्चित्सहर्षं स्वगतम् । जाणे पुणोवि पच्चागदं विअ जीविदं तेलोअस्स । (३)

रामः । हन्त भोः किमेतत् ।

---

(१) हा धिक् हा धिक् मां मन्दभागिनीमुद्दिश्य आमीलन्नेत्रनीलोत्पलो मूर्च्छित एव, हाहा कथं धरणीपृष्ठे निरुत्साहनिःसहं विपर्य्यस्तः, भगवति तमसे परित्रायस्व परित्रायस्व जीवयार्य्यपुत्रम् । निरुत्साहनिःसहम् उत्साहाभावेन दुर्व्वलं यथा तथा। विपर्य्यस्तः पतितः ।

(२) यद्भवतु तद्भवतु, यथा भगवती भणति। तथा करवाणीति शेषः ।

(३) जाने पुनरपि प्रत्यागतमिव जीवितं त्रिलोकस्य ।

---

* एष रामरूपो जनः यत्र तव प्रियस्पर्शः पाणौ एकान्तसक्तः आसीदिति शेषः ।



प्रश्चोतनं नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः।
आतप्तजीवितमनःपरितर्पणो मे
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः॥
स्पर्शः पुरा परिचितो नियतं स एष
सञ्जीवनश्च मनसः परिमोहनश्च।
सन्तापजां सपदि यः प्रतिहत्य मूर्च्छा
मानन्दनेन जड़तां पुनरातनोति॥

सीता। ससाध्वसोत्कम्पमपसृत्य। एत्तिकं ज्जेव मे दाणिं वहुदरं। (१)

रामः। उपविश्य। न खलु वत्सलया सीतादेव्या अभ्युपपन्नोऽस्मि?।

सीता। हद्धी हद्धी किंत्ति मं अज्जउत्तो मग्गिस्सदि। (२)

रामः। भवतु, पश्यामि।

सीता। भअवदि तमसे! ओसरह्म, जइ दाव मं पेक्खिस्सदि, तदो अणब्भणुण्णादसण्णिधाणेण अहिअं पि मम महाराओ कुप्पिस्सदि। (३)

(१) एतावदेव मे इदानीं वहुतरम्।

(२) हा धिक् हा धिक् किमिति मामार्य्यपुत्रो मार्गिष्यति।

(३) भगवति तमसे अपसरामः, यदि तावन्मां प्रेक्षिष्यते, तदा अनभ्यनुज्ञातसन्निधानेन अधिकमपि मम महाराजः कोपिष्यति।

* हरिचन्दनो देवतरुविशेषः तस्य पल्लवानां प्रश्चोतनममृतक्षरणम्। निष्पीडिताय इन्दुकरकन्दलः चन्द्रकिरणसमूहस्तज्जः तन्निःसृतनिर्य्यासं सृतः।

तम । अयि वत्से ! भागीरथीप्रसादाद्वनदेवतानामप्यदृ-श्या संवृत्तासि ।

सीता । आं अत्थि एदं । (१)

रामः । हा प्रिये जानकि ! ननु प्रिये जानकि !

सीता । समन्युगद्गदम् । अज्जउत्त ! असरिसं क्खु एदं वअ-णं इमस्स वुत्तन्तस्स । सास्रम् । अहवा किंत्ति वज्जमई जम्मन्त-रेसु वि पुणो असम्भाविददुल्लहदंसणं मं ज्जेव मन्दभाइणीं उ-द्दिसिअ वच्छलस्स एवं वादिणो अज्जउत्तस्स उअरि णिरणुक्को-सा भविस्सं,अहं एदस्स हिअअं जाणामि मम वि एसोत्ति । (२)

रामः । सर्व्वतोविलोक्य सनिर्व्वेदं । हा न काचिदत्र ।

सीता । भअवदि तमसे ! णिक्कारणपरिच्चाइणोवि एदस्स एदिणा एव्वंविधेण दंसणेण कीदिसोमे हिअआणुबन्धो-त्ति ण आणामि ण आणामि । (३)

---

(१) आं, अस्तीदम् ।

(२) आर्य्यपुत्र ! असदृशं खल्वेतद्वचनमस्य वृत्तान्तस्य । अथवा किमिति वज्रमयी जन्मान्तरेष्वपि पुनरसम्भावितदुर्लभदर्शनां मामेव मन्दभागिनीमुद्दिश्य वत्सलस्यैवं वादिनआर्य्यपुत्रस्योपरि निरनुक्रोशा भविष्यामि, अहमेतस्य हृदयं जानामि ममाप्येष-इति । अस्य वृत्तान्तस्य निष्कारणपरित्यागरूपस्य असदृशमयोग्यम् वज[redacted]त्र वज्रमई्व इति प्रथमान्तपाठः सम्यक् । जन्मान्त-रेष्वपि पुनरसम्भावितं दुर्लभदर्शनं त्वदीयदुष्प्रापदर्शनं ययेति विग्रहः । वत्सलस्य स्नेहवतः । निरनुक्रोशा निर्दया ।

(३) भगवति तमसे ! निष्कारणपरित्यागिनोऽप्येतस्यैतेनैवं वि-धेन दर्शनेन कीदृशोमे हृदयानुबन्धइति न जानामि न जानामि । एवंविधेन [redacted]जनित वैक्लव्यविषयेण । हृदयानुबन्धः हृदयस्या-वस्था । न जानामि न निर्द्धार्य्य वक्तुं शक्नोमि ।

नम । जानामि वत्से ! जानामि ।

तटस्थं नैराश्यादपि च कलुषं विप्रियवशा
द्वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव ।
प्रसन्नं सौजन्याद्दपि तु करुणैर्गाढ़करुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव ॥ *

रामः । देवि !

प्रसादइव मूर्त्तस्ते स्पर्शः स्नेहार्द्रशीतलः ।
अद्याप्यानन्दयति मां त्वं पुनः क्वासि नन्दिनि ॥ †

सीता । एदे दे अगाधदंसिदसिणेहसंभारा आणन्दणिस्सन्दिणो सुदा मए अज्जउत्तस्स उल्लावा, जाणं पच्चएण णिक्कारणपरिच्चाअसिल्लिदोवि वज्जमदो मे जम्मलाहो । (१)

(१) एते ते अगाधदर्शितस्नेहसम्भारा आनन्दनिष्यन्दिनः श्रुता मया आर्य्यपुत्रस्योल्लापाः, येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि वज्रमतो मे जन्मलाभः । अगाधमत्यधिकं यथा तथा दर्शितः स्नेहसम्भारः स्नेहातिशयो यत्र ते । उल्लापा उच्चै र्विलापाः । प्रत्ययेन साक्षाच्छ्रवणेन । निष्कारणपरित्यागशल्यितः निष्कारणपरित्यागरूपकलङ्कचिह्नितः । शिल्लित इत्यत्र सल्लित इति क्वचित्पाठः । सशल्यीकृत इत्यर्थः ।

* नैराश्यात् पुनःप्राप्तिप्रत्याशाभावात्तटस्थमुदासीनं । विप्रियवशात् निष्कारणपरित्यागरूपाप्रियकर्म्मकरणात् . कलु[illegible]ना विषं । झटिति घटनाय पुनर्मेलनाय उत्तम्भितमिव स्तब्धतरमिव । सौजन्यात् निर्दोषत्वज्ञानात् प्रसन्नं कोपशून्यं । करुणैः करुणवचनजातश्रवणेन, गाढकरुणं कृपार्थयुक्तं करुणरसव्याप्तं वा । द्रवीभूतं गलितमिव । अस्मिन् क्षणे इति उत्तरार्द्धगतविशेषणद्वयेनान्वेति इवेत्यस्य द्रवीभूतमित्यनेनान्वयः ।

† नन्दिनि आनन्दजनिके ।

रामः । अथवा कुतः प्रियतमा, नूनं संकल्पाभ्यासपाटवोपादानएष रामस्य भ्रमः ।

नेपथ्ये । प्रमादः प्रमादः । सीतादेव्याः स्वकरकलितैरित्यर्द्धं पठ्यते ।

रामः । सकरुणौत्सुक्यं । किं तस्य ?

पुनर्नेपथ्ये । बध्वा सार्द्धमित्युत्तरार्द्धं पठ्यते ।

सीता । को दाणिं अहिउज्झिस्सदि । (१)

रामः । कासौ दुरात्मा यः प्रियायाः पुत्रकं बधूद्वितीयमभिभवति । इत्युत्तिष्ठति ।

प्रविश्य । सम्भ्रान्ता वासन्ती । कथं देवो रघुनन्दनः ?

सीता । कधं पिअसही मे वासन्दी ? (२)

वास । जयति जयति देवः ।

रामः । निरूप्य । कथं देव्याः प्रियसखी वासन्ती ?

वास । देव ! त्वर्य्यतां त्वर्य्यताम, इतोजटायुगिरिशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य्य सम्भावयतु देव्याः पुत्रकं देवः ।

सीता । हा ताद जटाओ ! सुण्णं तए विणा जणट्ठाणं । (३)

रामः । अहह ! हृदयमर्म्मच्छिदः खल्वमी कथोद्घाताः । *

---

(१) क इदानीमभियोक्ष्यते । अभियोक्ष्यते तत्परित्राणाय मया नियोक्ष्यते । णिउज्झिस्सदीति पाठः सम्यक् ।

(२) कथं प्रियसखी मे वासन्ती !

(३) हा तात जटायो ! शून्यं त्वया विना जनस्थानम् ।

---

* कथोद्घाताः सीताविषयककथाया उपक्रमाः ।

वास । इतइतो देवः ।

सीता । भअवदि ! सच्चंज्जेव वणदेवदा वि मं ण पेक्खदि ? (१)

तम । अयि वत्से ! सर्व्वदेवताभ्यः प्रकृष्टमैश्वर्य्यं भागीरथीदेव्याः, तत्किमाशङ्कसे ।

सीता । तदो अणुसरह्म । (२) इति परिक्रामतः ।

रामः । परिक्रम्य । भगवति गोदावरि ! नमस्ते ।

वास । निरूप्य । देव देव ! मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण ।

रामः । विजयतामायुष्मान् ।

सीता । अह्महे ईदिसो एस संवुत्तो ! (३)

रामः । देवि ! दिष्ट्या वर्द्धसे ।

येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु ! लवलीपल्लवः कर्णपूरात् ।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यत्कल्याणं वयसि तरुणे * भाजनं तस्य जातः ॥

सीता । अविउत्तो दाणीं अअं दीहाऊ इमाए सोम्मदंसणाए भोदु । (४)

---

(१) भगवति ! सत्यमेव वनदेवतापि मां न प्रेक्षते ?

(२) ततोऽनुसरामः ।

(३) अहो ईदृशएष संवृत्तः । ईदृग्प्रशस्तवयस्कः ।

(४) अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु । सौम्यदर्शनया करिण्या । अनया अवियुक्तो भवत्वित्यन्वयः । आवयोरिव अनयोर्विरहो माभूदित्यर्थः ।

---

* तरुणे वयसि-यत्कल्याणं प्रतिपक्षविजयादिरूपं मङ्गलम् ।

रामः। सखि वासन्ति! पश्य पश्य कान्तानुवृत्तिचातुर्य्यमप्यनुशिचितं वत्सेन।

लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपातिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः।
सेकः शीकरिणा करेण विहितः कामं, विरामे पुन
र्यत्स्नेहादनरालनालनलिनीपत्त्रातपत्त्रं धृतम्॥ *

सीता। भअवदि तमसे! अअं दाव ईदिसो जादो, दे उण ण आणामि कुसलवा एत्तिकेण कालेण कीदिसा विअ होन्ति। (१)

तम। यादृशोऽयं तादृशौ तावपि।

---

(१) भगवति तमसे! अयं तावदीदृशो जातः। तौ पुनर्न जानामि कुशलवावेतावता कालेन कीदृशाविव भवतः।

---

* लीलया उत्खातानामुद्धृतानां मृणालकाण्डानां मृणालस्तम्बानां ये कवलच्छेदाः ग्रासभूताः खण्डास्तेषु पुष्यद्भिः प्रस्फुटद्भिः पुष्करैः पद्मैर्वासितस्य सुरभीकृतस्य पयसो गण्डूषसंक्रान्तयः गण्डूषः शुण्डाग्रं तेन संक्रान्तयः संयोजनानि छद्मभिन्नभावत्वात् शुण्डेन संक्राम्यमाणतादृशजलविन्दव इत्यर्थः संपातिता निक्षिप्ताः संपादिता इति क्वचित्पाठः। करिण्याभोजनसौकर्य्यार्थमितिभावः। ततश्च शीकरिणा जलकणान् मुञ्चता करेण शुण्डेन कामम पर्य्याप्तं सेको विहितः। विरामे पुनः सेकस्यावसाने च अनरालमवक्रं नालं यस्य तादृशं नलिनीपत्त्ररूपमातपत्त्रं छत्त्रं धृतम् आतपनिवारणायेति शेषः। यदिति स्नेहादिति च वाक्यद्वयेऽन्वेति।

सीता । ईदिसी अहं मन्दभाइणी, जाए ण केवलं णिर-न्तरं अज्जउत्तविरहो पुत्तविरहोवि । (१)

तम । भवितव्यतेयमीदृशी ।

सीता । किं वा मए पसूदाए, जेण तादिसंपि मम पुत्त-काणं ईसिविरलकोमलधवलदसणुज्जलकबोलं अणुवद्धमुद्धका-अलिविहसिदं णिवद्धकाकसिहण्डअं अमलमुहपुण्डरीअजु-अलं ण परिचुम्बिअं अज्जउत्तेण । (२)

तम । अस्तु देवताप्रसादात् ।

सीता । भअवदि तमसे ! एदिणा अपच्चसंसुमरणेण उस्स-सिदपण्हुदत्थणी ताणञ्च पिदुणो सण्णिधाणेण खणमेत्तं संसा-रिणीह्मि संवुत्ता । (३)

(१) ईदृशी अहं मन्दभागिनी । यस्या न केवलं निरन्तरमा-र्य्यपुत्रविरहः, पुत्रविरहोऽपि ।

(२) किं वा मया प्रसूतया, येन तादृशमपि मम पुत्रयोरीष-द्विरलकोमलधवलदशनोज्ज्वलकपोलमनुबद्धमुग्धकाकलीविहसि-तं निबद्धकाकशिखण्डकममलमुखपुण्डरीकयुगलं न परिचुम्बित मार्य्यपुत्रेण । प्रसूतयेति अनुपात्तकर्म्मत्वेनाकर्म्मकस्य सूङः कर्त्त रि क्तः । प्रसूतया मया किं मम पुत्रप्रसवेन किं फलमुत्पन्नमित्यर्थः । अनुबद्धा मुग्धा मनोज्ञा काकली सूक्ष्ममधुरास्फुटध्वनिर्येन तादृशं विहसितं यत्र तत् । काकशिखण्डकः काकपक्षः केशभागवि शेष इत्यर्थः । निबद्धः स यत्र तत् ।

(३) भगवति तमसे ! एतेनापत्यसंस्मरणेन उच्छ्वसितप्रस्नुतस्तनी तयोश्च पितुः सन्निधानेन क्षणमात्रं संसारिण्यस्मि संवृत्ता । संसा-रिणी संसारसुखवती तच सुखं स्त्रीणां पतिसान्निध्यसहितपुत्र सद्भावजन्यम् ।

तम्। किमत्रोच्यते? प्रसवः खलु प्रकर्षपर्य्यन्तः स्नेहस्य। परस्त्वेतदस्योऽन्यसंश्लेषणं पित्रोः। *

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते॥ †

वास। इतोऽपि देवः पश्यतु।

अतरुणमदताण्डवोत्सवान्ते-
ष्वयमचिरोद्गतमुग्धलोलवर्हः।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी॥ ‡

---

* प्रसवः पुत्रः, स्नेहस्य प्रकर्ष उत्कर्ष आधिक्यमित्यर्थः तस्य पर्य्यन्तः शेषसीमा स्नेहस्य परा काष्ठा पुत्र एव पर्य्यवस्यतीत्यर्थः। अतएवोक्तं नच पुत्रसमः स्नेह इति। परस्त्वेतदिति एतत् प्रसवरूपं पित्रोः परमत्यन्तं केवलंवा अन्योऽन्यसंश्लेषणं परस्परसम्बन्धः।

† दम्पत्योरन्तःकरणतत्त्वस्य चतुर्विंशतितत्त्वान्तर्गतस्य मनसः। अन्तःकरणयुग्मस्येति पाठः सम्यक्। स्नेहस्य संश्रयः सम्यक् धर्णं तस्मात् अपत्यमिति अपत्यरूपएक आनन्दमयग्रन्थिर्बध्यते विरचितेति शेषः, नेदमपत्यं किन्तु दम्पत्योरन्तःकरणयोरानन्दमयग्रन्थि त्यर्थः।

‡ अतरुणः प्रकृष्टोयोमद आनन्दोविकारविशेषोवा तेन ये ताण्डवोत्सवास्तत्यामोदास्तेषामन्तेषु विरामेषु। अचिरोद्गतेति वनस्याचिरोत्पन्त्या इति भावः। मणिमुकुट इवेति कदम्ब वस्येत्यर्थः। स एष इति सीतादेव्या यः पुत्रीकृत्य पालित त्यर्थः।

सीता । सकौतुकास्नम् । एसो सो एसो सो । (१)

रामः । वत्स ! मोदस्व, वयमद्य वर्त्तामहे । *

सीता । एव्वं भोदु । (२)

रामः । भ्रमिषु कृतपुटान्तर्मण्डलावृत्ति चक्षुः
प्रचलितचतुरभ्रूताण्डवैर्मण्डयन्त्या । †
करकिसलयतालैर्मुग्धया नर्त्त्यमानं
सुतमिव मनसा त्वां वत्सलेन ‡ स्मरामि ॥

हन्त तिर्य्यञ्चोऽपि परिचयमनुरुध्यन्ते ।
कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्द्धितो य आसीत् ।

सीता । निरूप्य सास्रं । सुट्ठु पच्चभिआणिदं अज्जउ-त्तेण । (३)

रामः । स्मरति § गिरिमयूर एष देव्याः
स्वजनइवात्र यतः प्रमोदमेति ॥

(१) एष सः एष सः । स इति यः पूर्व्वं मया पुत्त्रीकृत्य पालित इत्यर्थः ।

(२) एवं भवतु । मुदिताभवत्वित्यर्थः ।

(३) सुष्ठु प्रत्यभिज्ञातमार्य्यपुत्त्रेण ।

* वर्त्तामहे जीवामः ।

† भ्रमिषु भिन्नभ्रमतिषु कृता पुट्योरावरकयोरन्तर्मध्ये मण्डलावृत्तिः मण्डलाकारेणावर्त्तनं येन तादृशं चक्षुः कर्म्म प्रचलितयोश्चतुरयोः सविलासयोर्भ्रुवोस्ताण्डवैर्नर्त्तनैर्मण्डयन्त्या शोभयन्त्या

‡ वत्सलेन स्नेहवता ।

§ स्मरतीति तं कदम्बमिति शेषः ।

वास। अत्र तावदासनपरिग्रहं करोतु देवः।

एतत्तदेव कदलीवनमध्यवर्त्ति
कान्तासखस्य शयनीयशिलातलन्ते।
अत्र स्थिता तृणमदाद्बहुशो यदेभ्यः
सीता, ततोहरिणकैर्न विमुच्यते स्म॥

रामः। इदन्तावदशक्यमेव द्रष्टुम्। इत्यन्यतोऽवदनुपविशति।

सीता। सहि वासन्दि! किं तुए कदं अज्जउत्तस्स मम अ एदं दंसअन्तीए, हद्धी हद्धी सोज्जेव अज्जउत्तो, तंज्जेव पञ्चवटीवणं, साज्जेव वासन्ती, ते ज्जेव विविहविस्सम्भसक्खिणो गोदावरीकाणणुद्देसा, ते ज्जेव जादणिव्विसेसा मअपक्खिपादवा, साज्जेव चाहं, मम उण मन्दभाइणीए दीसन्तंपि सव्वं ज्जेव एदं णत्थित्ति, ता ईदिसो जीअलोअस्स परिवत्तो। (१)

वास। सखि सीते! कथं न पश्यसि रामस्यावस्थाम्। *

---

(१) सखि वासन्ति! किं त्वया कृतमार्य्यपुत्रस्य मम च एतद्दर्शयन्त्या। हा धिक् हा धिक् सएवार्य्यपुत्रः, तदेव पञ्चवटीवनं, सैव वासन्ती, तएव विविधविश्रम्भसाक्षिणो गोदावरीकाननोद्देशाः तएव जातनिर्व्विशेषा मृगपक्षिपादपाः, सैव चाहं, मम पुनर्मन्दभागिन्या दृश्यमानमपि सर्व्वमेवैतन्नास्तीति, तदीदृशो जीवलोकस्य परिवर्त्तः। जातनिर्व्विशेषाः पुत्रप्रायाः।

---

* सीतां मनसिकृत्य वासन्त्याः सीते इत्यादि सम्बोधनं भागीरथ्यावरेण सीतायाः साक्षाद्दर्शनाभावात्।

कुवलयदलस्निग्धैरङ्गैर्ददौ नयनोत्सवं
सततमपि ते स्वेच्छादृश्योनवोनवएव यः
विकलकरणः पाण्डुच्छायः शुचा परिदुर्ब्बलः
कथमपि सदृत्युन्नेतव्यस्तथापि दृशोः प्रियः ॥ †

सीता। पेक्खामि सहि पेक्खामि (१)

तम। पुत्रि ! पश्यन्ती प्रियं भूयाः। ‡

सीता। हा देव्व एसो मए विणा,अहम्मि एदेण विणेत्ति सिविणेवि केण सम्भाविदं आसी, ता मुहुत्तकंपि जम्मन्तरादो विअ अणुलद्धदंसणा वाहसलिलन्तरेसु पेक्खामि दाव वच्छलं अज्जउत्तं। (२) इति पश्यति।

तम। सस्नेहास्नं परिष्वज्य।

विलुलितमतिपूरैर्वाष्पमानन्दशोक
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा।

---

(१) पश्यामि सखि पश्यामि।

(२) हा देव एष मया विना अहमप्येतेन विनेति स्वप्नेऽपि केन सम्भावितमासीत्। तन्मुहूर्त्तकमपि जन्मान्तरत इव अनुलब्धदर्शना वाष्पसलिलान्तरेषु पश्यामि तावद्वत्सलमार्य्यपुत्रम्। जन्मान्तरत इति सप्तम्यन्तं। वाष्पसलिलानामन्तरेष पतनपुनरुत्पत्तिमध्येषु।

---

* स्वेच्छादृश्यइत्यत्रापिकारोबोध्यः सततं दृश्यमानोऽपीत्यर्थः नवोनव इति प्रेमातिशयसद्भावादितिभावः।

† कथमपि निपुणाभिनिवेशेन स इति सोऽयमिति उन्नेतव्यः प्रत्यभिज्ञातव्यः। दृशोः प्रिय इति अस्माकमिति शेषः।

‡ प्रियं पश्यन्ती भूयाः सचिरं प्रियं पश्य।

स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥ *

वास ।

ददतु तरवः पुष्पैरर्घं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रत्युत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ †

रामः । एहि सखि वासन्ति ! नन्वितः स्थीयताम् ।

वास । उपविश्य सास्रं । महाराज ! अपि कुशलं कुमार-लक्ष्मणस्य ? ।

रामः । अश्रुतिमभिनीय ।

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान् मैथिली यानपुष्यत् ।

---

* अतिपूरैः प्रवाहाधिक्येन विलुलितं सवेगं पतत् । तृष्णया सादरदिदृक्षया उत्ताना विस्फारिता अतएव दीर्घा च । उत्तानदीर्घा अतिदीर्घा वा । स्नपयति क्षालयति सादरं विषयीकरोतीत्यर्थः । धवला कोपकषायितत्वाभावेन श्वेतप्रधाना बहलमुग्धा अतिमनोज्ञा च ।

† मधुश्च्युतो मधुवर्षिणः एतेन मधुपर्कदानमपि प्रतिपादितं । स्फुटितानां कमलानामामोदः सौरभं तस्य प्रायो बाहुल्यं यत्र ते । प्रवान्तु मन्दं वहन्तु । वनानिला वनसंसर्गितया शीतला वायवः । रत्युत्कण्ठाः रामागमनप्रीत्या उत्तोलितग्रीवाः सन्तः । रत्युत्कर्णा इति पाठस्तु न मनोरमः ।

भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रवइव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥ *

वास । महाराज ! ननु पृच्छामि, अपि कुशलं कुमार लक्ष्मणस्य ? ।

रामः । स्वगतम् । अये महाराजेति निष्प्रणयमामन्त्रण पदं, सौमित्रिमात्रे च वाष्पस्खलिताक्षरः † कुशलप्रश्न, स्तथा मन्ये विदितसीतावृत्तान्तेयमिति । प्रकाशम् । आः ‡ कुशलं कुमारस्येति रोदिति ।

वास । अयि देव ! किमिति दारुणोदारुणः § खल्वसि ।

सीता । सहि वासन्दि ! किं तुमं सि एव्वं वादिणी, पिआरहोक्खु सव्वस्स अज्जउत्तो, विसेसदो मम पिअसहीणं । (१)

वास । त्वं जीवितं त्वमसि मे हृद[illegible]द्वितीयं,
त्वं कौमुदी नयनयो, रमृतं त्वमङ्गे ।

---

(१) सखि वासन्ति ! किं त्वमस्येवंवादिनी, प्रियार्हः खलु सर्व्वस्यार्य्यपुत्रः, विशेषतो मम सखीनाम् । असि भवसि । प्रियार्हः प्रियाचापयोग्यः ।

---

* कोऽपि अनिर्व्वचनीयः विकारः शोकजार्त्यं । हृदयस्य उदीरितकाठिन्यस्यापि मनसः द्रवइव गलितप्रायत्वमिव प्रस्तरोद्भेदयोग्यः पाषाणद्रवसदृशः ।

† महाराजेति ननु प्रियसुहृत् सीतापते इति । निष्प्रणयं स्नेहाव्यञ्जकम् । आमन्त्रणपदं सम्बोधनपदम् । सौमित्रिमात्रे ननु सीतायाश्च । वाष्पस्खलिताक्षरः ननु हर्षगद्गदस्वरः ।

‡ आः इत्यनास्थायाम् ।

§ दारुणोदारुणोऽतिदारुणः प्रियतमापरित्यागेनेति शेषः ।

इत्यादिभिः प्रियशतैरनुरुध्य * मुग्धां
तामेव,शान्तमथवा किमिहोत्तरेण ॥ †

इति मूर्च्छति।

रामः। स्थाने खलु वाक्यनिवृत्ति ‡ र्मोहश्च, सखि ! समाश्वसिहि समाश्वसिहि।

वास। समाश्वस्य। तत्किमिदमकार्य्यमनुष्ठितं देवेन।

सीता। सहि वासन्दि ! विरम विरम। (१)

रामः। लोको न मृष्यतीति। §

वास। तत्कस्य हेतोः।

रामः। सएव जानाति किमपि।

तम। उचितस्तदुपालम्भः ¶।

---

(१) सखि वासन्ति ! विरम विरम।

---

* अनुरुध्य सन्तोष्य।

† तामेवेति एवकारोऽप्यर्थे, अतिप्रेमास्पदीभूतामपीत्यर्थः। निष्कारणं परित्यक्तवानसीतिवाक्यशेषः, अतएवाक्षेपः सखानुपातोऽशक्यवक्तव्यत्वद्योतनेन दुःखातिशयं व्यनक्ति। अथवा शान्तं इदानीं तत्कथनेनालं। किमिति तत्र कथयसीत्याह किमिहोत्तरेणेति इह उत्तरेण परित्यक्तवानिति वाक्योत्तरांशकथनेन किं न किमपि प्रयोजनमस्तीत्यर्थः।

‡ स्थाने उपयुक्तस्थले वाक्यनिवृत्तिर्वाक्योत्तरांशानुक्तिः दुःखातिशयद्योतनादिति भावः। वाक्यनिवृत्तिः स्थाने युक्तेति वा।

§ न मृष्यति सीताया गृहावस्थितिं न सहते।

¶ तदुपालम्भः लोकं प्रत्याक्षेपः।

वास । अयि कठोर ! यशः किल ते प्रियं
किमयशोननु घोरमतः परम् । *
किमभवद्विपिने हरिणीदृशः
कथय नाथ ! कथं वत मन्यसे ॥

सीता । तुमं ज्जेव सहि वासन्दि ! दारुणा कठोरा अ, जा एव्वं विलवन्ती पदीवेसि । (१) ।

तम । प्रणयएवेदं व्याहरति शोकश्च ।

रामः । सखि ! किमत्र मन्तव्यम् ।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे †
स्तस्याः परिस्फुरितगर्भभरालसायाः ।
ज्योत्स्नामयीव ‡ मृदुवालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥

सीता । अज्जउत्त ! धरामि एसा धरामि । (२)

रामः । हा प्रिये जानकि ! क्वासि ॥

---

(१) त्वमेव सखि वासन्ति ! दारुणा कठोराच, या एवं विलपन्ती प्रदीपयसि । प्रदीपयसि प्रदीप्तविरहदुःखमार्य्यपुत्रं करोषि ।

(२) आर्य्यपुत्र ! ध्रिये एषा ध्रिये । ध्रिये जीवामि ।

---

* यशोलिप्सुना त्वया अत्यन्तमयशः सञ्चितमिति विषमम् ।

† त्रस्तोभयचपलः एकहायन एकवर्षवयस्कोयः कुरङ्गोहरिणस्तस्येव विलोला दृष्टिर्यस्याः सा तथा तस्याः ।

‡ ज्योत्स्नामयी ज्योत्स्नावत्कोमला ।

सीता । हद्धी हद्धी अज्जउत्तोवि पमुक्तकण्ठं रोदिदि । (१)

तम । वत्से ! साम्प्रतिकमेवैतत्, * कर्त्तव्यानि दुःखितै † र्दुःखनिर्व्वापनानि, यतः ।

पूरोत्पीड़े तड़ागस्य परीवाहः प्रतिक्रिया । ‡
शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते ॥
विशेषतो रामभद्रस्य बहुतरप्रकारकष्टोजीवलोकः ।
इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोकोजीवं कुसुममिव घर्म्मः क्लमयति ।
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ
स्तदद्याप्युच्छ्वासोभवति ननु लाभोविरुदितम् ॥ §

रामः । कष्टं भोः कष्टम् ।

---

(१) हाधिक् हाधिक् आर्य्यपुत्रोऽपि प्रमुक्तकण्ठं रोदिति ।

---

* सांप्रतिकं युक्तिसिद्धम् ।

† दुःखितैः सद्भिः ।

‡ पूरोत्पीडे जलराश्युद्रेके सति । परीवाहोजलोच्छ्वासः जलनिर्गमनमार्गेण जलनिःसारणमित्यर्थः प्रतिक्रिया समाधानम् ।

§ अभियुक्तेन सततोद्योगवता तत्तत्कार्य्यजातव्यग्रेणेत्यर्थः । विलपनेन विनोदः शोकापनोदनम् । असुलभोदुर्लभः नगरे स्थितस्येति शेषः । अद्यापीत्यत्र अत्रेति पाठः सम्यक् अत्र निर्जनारण्ये । उच्छ्वासोदीर्घोच्छ्वासपरित्यागेन शोकं लघयन् । ननु यतः, लाभोहितकरम् ।

दलति हृदयं गाढ़ोद्वेगोद्दिधा नतु भिद्यते
वहति विकलः कायोमोहं न मुञ्चति चेतनाम् । †
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधि ‡ मर्म्मच्छेदी न कृन्तति जीवितम् ॥

सीता । एवमेदं । (१)

रामः । हे भवन्तः पौरजानपदाः ।

न किल भवतां स्थानं देव्यागृहेऽभिमतं तत
स्तृणमिव वने शून्ये त्यक्ता न वाप्यनुशोचिता ।
चिरपरिचितास्ते ते भावाः परिद्रवयन्ति मा
मिदमशरणैरद्याप्येवं प्रसीदत रुद्यते ॥ §

---

(१) एवमिदम् ।

---

* दलति पिनष्टि । गाढोद्वेगं गाढोत्कण्ठमिति च पाठे पिष्टं भवतीत्यर्थः ।

† कायस्य मोहचेतनयोः सम्बन्धस्तदवच्छेदकत्वात् परम्परया ।

‡ विधिर्दैवम् ।

§ किल यतः देव्याः सीताया मम गृहे स्थानं भवतां नाभिमतं ततोहेतोः । शून्ये निर्मनुष्ये । वनेऽनाथा त्यक्तेति,क्वचित् पाठः । चिरपरिचिताः पूर्व्वं सीतया सार्द्धं विहारास्पदत्वेन चिरमनुभूता भावाः पदार्थाः वनप्रदेशादयः परिद्रवयन्ति तत्स्मारणाद्याकुलयन्ति । इदमशरणैरस्मिन् विषये निरुपायैः सद्भिः । समस्तमिदम् । इममितिपाठे मामित्यस्य विशेषणम् इमं जीवन्तम् । इदं रुद्यते इति क्रियाविशेषणन्तु न सम्यक् । अस्माभिरेवं विमुक्तकण्ठं रुद्यते अद्यापि यूयं प्रसीदत सीतायागृहेऽवस्थानमनुमन्यध्वं तथा सति तामन्वेषयामीतिभावः ।

तम। अतिगम्भीरमापूरणं शोकसागरस्य।

वास।देव! अतिक्रान्ते * धैर्य्यमवलम्ब्यताम्।

रामः। सखि! किमुच्यते धैर्य्यमिति।

देव्या शून्यस्य जगतोद्वादशः † परिवत्सरः।
प्रनष्टमिव नामापि नच रामोन जीवति॥ ‡

सीता। मोहिदह्मि अज्जउत्तस्स एदेहिं वअणेहिं (१)

तम। एवं वत्से।

नैताः प्रियतमावाचः स्नेहार्द्राः, शोकदारुणाः।
एतास्तामधुनोधाराश्च्योतन्ति सविषास्त्वयि॥ §

रामः। अयि वासन्ति! मया खलु

यथा तिरश्चीनमलातशल्यं प्रत्युप्तमन्तः, सविषश्च दंशः। ¶
तथैव तीव्रोहृदि शोकशङ्कुर्मर्म्माणि कृन्तन्नपि किं न सोढः॥

सीता। एवं ह्मि मन्दभाइणी पुणोवि आआसआरिणी अज्जउत्तस्स। (२)

---

(१) मोहितास्मि आर्य्यपुत्रस्यैतैर्वचनैः।

(२) एवमस्मि मन्दभागिनी पुनरप्यायासकारिण्यार्य्यपुत्रस्य। अस्मि भवामि।

---

* अतिक्रान्ते अतीतविषये।

† किमुच्यत इति धैर्य्यवानेवास्मीत्यर्थः।

‡ नचेति धैर्य्यं विना रामः कथं जीवतीत्यर्थः।

§। एतावाचः स्नेहार्द्राइति कृत्वा प्रियतमा न, किन्तु शोकेन दारुणादुःश्रवाः। सविषामधुनोधारास्त्वेश्च्योतन्तीत्यन्वयः।

¶ तिरश्चीनं वक्रभावेन प्रविष्टं। अलातशल्यं ज्वलदङ्गाररूपशल्यम्। दंशः सर्पादिदंशनम्।

राम: । एवमतिनिष्कम्पस्तम्भितान्तःकरणस्यापि मे संस्तुतबहुतरप्रियदर्शनादुद्दामोऽयमावेगः । * तथाहि

लोलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
योयोयत्नः कथमपि मया धीयते तन्तमन्तः । †
भित्त्वा भित्त्वा प्रसरति बलात्कोऽपि चेतोविकार
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥

सीता । एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुःक्खसंक्खोहेण पप्फुरिदणिअदुक्खं विअ आकम्पिदं मे हिअअं । (१)

वास । स्वगतं । कष्टमभ्यापन्नोदेवस्तदन्यतः क्षिपामि

---

(१) एतेनार्य्यपुत्रस्य दुर्व्वारदारुणारम्भेण दुःखसंक्षोभेण प्रस्फुरितनिजदुःखमिवाकम्पितं मे हृदयम् । दुर्व्वारोऽवारणीयोदारुणोऽसह्यआरम्भउद्रेकोयस्य तादृशेन दुःखेन जनितोयः संक्षोभोव्याकुलत्वं तेन ।

---

* अतिनिष्कम्पमतिनिश्चलमतिसावधानमित्यर्थः यथा तथा स्तम्भितं स्थिरीकृतमन्तःकरणं येन तस्य । निष्कम्पेत्यत्र निगूढेति क्वचित्पाठः । संस्तुतानि पूर्व्वं परिचितानि बहुतराणि नत्वेकंद्वेवा यानि प्रियाणि रम्यवस्तूनि तेषां दर्शनादुद्दाम उद्भटः आवेगोव्याकुलत्वम् ।

† लोलोल्लोलमतिलोलं यथा तथा क्षुभितः क्षोभंगतो वर्द्धनोन्मुखइत्यर्थः यः करुणोरसविशेषस्तस्थायिभावः शोक इत्यर्थः । तस्य यदुज्जृम्भणमुद्रेकस्तस्य स्तम्भनार्थं प्रतिरोधाय । मया धीयत इत्यत्र समाधीयत इति पाठे मयेति शेषः ।

तावत् । प्रकाशं । चिरपरिचितानामिदानीं जनस्थानभागानामवलोकनेनात्मानमानन्दयतु देवः ।

रामः । एवमस्तु । इत्युत्थाय परिक्रामति ।

सीता । सन्दीवणाश्रो ज्जेव दुक्खस्स पिअसहीविणोदणोवाश्रोत्ति मण्णेदि । (१)

वास । देव देव !

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीरोधसि ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्य्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥

सीता । दारुणासि सहि वासन्दि ! दारुणासि, जा एदेहिं हिअअमम्मगूढ़ सल्लसरिसेहिं पुणो पुणो मं मन्दभाइणीं अज्जउत्तं वि दूणावेसि । (२)

रामः । चण्डि जानकि ! इतस्ततो दृश्यसइव नचानुकम्पसे ।

हाहा देवि स्फुटति हृदयं स्रंसते देहबन्धः
शून्यं * मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।

---

(१) सन्दीपनाएव दुःखस्य प्रियसखीविनोदनोपायाइति मन्यते ।

(२) दारुणासि सखि वासन्ति ! दारुणासि, या एतैर्हृदयमर्म्मगूढशल्यसदृशैः पुनःपुनर्मां मन्दभागिनीमार्य्यपुत्रमपि दुनोषि । हृदयस्य यन्मर्म्मस्थानं तत्र गूढं प्रविष्टं यच्छल्यं तत्सदृशैर्वचनैरिति शेषः ।

---

* शून्यं प्रत्यारहितम् निर्विनोदम्वा ।

सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा,
विष्वङ्मोहः स्थगयति, कथं मन्दभाग्यः करोमि॥*

इति मूर्च्छति।

सीता। हद्धी हद्धी पुणोवि पमूढो अज्जउत्तो। (१)

वास। देव समाश्वसिहि समाश्वसिहि।

सीता। हा अज्जउत्त! मं मन्दभाइणीं उद्दिसिअ सअलजीअलोअमङ्गलाधारस्स दे जम्मलाहस्स वारंवारं संसइदजीविददारुणो दसापरिणामोत्ति हाहदह्मि। (२)

इति मूर्च्छति।

तम। वत्से! समाश्वसिहि समाश्वसिहि, पुनस्त्वत्पाणिस्पर्श एव सञ्जीवनोपायो रामभद्रस्य।

वास। कथमद्यापि नोच्छ्वसिति, हा प्रियसखि सीते! क्वासि, सम्भावयात्मनो जीवेश्वरम्।

सीता। ससंभ्रममुपसृत्य हृदि ललाटे च स्पृशति।

वास। दिष्ट्या प्रत्यापन्नजीवनो रामभद्रः।

---

(१) हा धिक् हा धिक् पुनरपि प्रमूढ आर्य्यपुत्रः।

(२) हा आर्य्यपुत्र! मां मन्दभागिनीमुद्दिश्य सकलजीवलोकमङ्गलाधारस्य ते जन्मलाभस्य वारंवारं संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि।

---

* विष्वक् समस्तभावजातं स्थगयति ज्ञानाविषयं करोति। कथं किम्।

रामः। आलिम्पन्नमृतमयैरिव प्रलेपै

रन्तर्वा वहिरपि वा शरीरधातून्*।

संस्पर्शः पुनरपि जीवयन्नकस्मा

दानन्दादपरविधं तनोति मोहम्॥

आनन्दनिमीलिताक्ष एव सखि वासन्ति! दिष्ट्या वर्द्धसे।

वास। देव कथमिव?

रामः। सखि! किमन्यत्, पुनः प्राप्ता जानकी।

वास। अयि देव! क्व सा?

रामः। स्पर्शसुखमभिनीय। पश्य नन्वियं पुरत एव।

वास। अयि देव! किमिति मर्म्मच्छेददारुणैरतिप्रलापैः प्रियसखीदुःखदग्धामपि पुनर्मन्दभागिनीं मां दहसि।

सीता। ओसरिदुमिच्छामि, एसो उण चिरसब्भावसोम्मसीअलेण अज्जउत्तप्फंसेण दीहदारुणं वि सन्दावं हरन्तेण वज्जलेबोबणिबद्धो विअ सिद्दन्तनीसहविपल्हत्थो वेअणसीलो अवसो विअ मे हत्थो। (१)

(१) अपसर्त्तुमिच्छामि, एष पुनश्चिरसद्भावसौम्यशीतलेनार्य्यपुत्रस्पर्शेन दारुणमपि सन्तापं हरता वज्रलेपोपनिबद्ध इव खिद्यन्निःसहविपर्य्यस्तो वेपनशीलोऽवश इव मे हस्तः। चिरसद्भावेनाव्यभिचारिप्रणयेन सौम्यः सुखदः शीतलश्च तेन। खिद्यन् खेदवान् निःसहो दुर्व्वलः अतएव विपर्य्यस्तः विपर्य्यासं प्राप्तः स्वभावप्रच्युत इत्यर्थः। विशेषणानां कर्म्मधारयः। हरन्तेनेत्यत्र करन्तेनेति पाठोन सम्यक्।

* अन्तःशरीरधातवोरक्तादयः वहिःशरीरधातवस्त्वगादयः।

रामः। सखि! कुतः प्रलापाः।

गृहीतोयः पूर्व्वं परिणयविधौ कङ्कणधरः
चिरं स्वेच्छास्पर्शैरमृतशिशिरैर्यः परिचितः।

सीता। अज्जउत्त! सोज्जेव दाणिं सि तुमं?। (१)

रामः। सएवायं तस्यास्तुहिननिकरौपम्यसुभगो
मया लब्धः पाणिर्ललितलवलीकन्दल * निभः॥

इति गृह्णाति।

सीता। हद्धी हद्धी अज्जउत्तप्फंसमोहिदाए पमादो क्खु मे संवुत्तो। (२)

रामः। सखि वासन्ति! आनन्दनिमीलितेन्द्रियः साध्वसेन † परवानस्मि, तत्त्वं तावदेनां धारय।

वास। कष्टमुन्माद एव।

सीता। ससम्भ्रममाक्षिप्यापसर्पति।

रामः। हा धिक् प्रमादः हा धिक् प्रमादः।

करपल्लवः सतस्याः सहसैव जडाज्जडः परिभ्रष्टः।
परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन्॥

(१) आर्य्यपुत्र! सएवेदानीमसि त्वम्? सएव तद्भाववानेव, किमिति प्रेमः, मया पुनर्ज्ञातं सभावस्त्वेदानीं विनष्ट इति कथमन्यथा मामप्रणयीव त्यक्तवानसीति काक्वा व्यज्यते।

(२) हा धिक् हा धिक् आर्य्यपुत्रस्पर्शमोहितायाः प्रमादः खलु मे संवृत्तः। प्रमाद इति मत्प्रत्यभिज्ञानादिति भावः।

* कन्दलं नवाङ्कुरं पल्लवेति क्वचित्पाठः।

† साध्वसेन आनन्दजाड्येन।

सीता । हद्धी हद्धी अज्जवि अणवत्थिदत्थिमिदमूढ़घुम्मन्तणअणो ण पज्जवत्थावेदि अत्ताणअं । (१)

तमः । सखेदं निर्व्वर्ण्य ।

सस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा ।
मरुन्नवाम्भःप्रविधूतसिक्ता * कदम्बयष्टिः स्फुटकोरकेव ॥

सीता । स्वगतम् । अम्महे ! अवसेण एदेण अत्ताणएण लज्जाविदह्मि भअवदीए तमसाए, किंत्ति किल एसा मणिस्सदि एसो परिच्चाओ एसो अहिसङ्गोत्ति । (२)

रामः । सर्व्वतोऽवलोक्य । कथं नास्त्येव नन्वकरुणे वैदेहि !

---

(१) हा धिक् हा धिक् अनवस्थितस्तिमितमूढघूर्णमाननयनो न पर्य्यवस्थापयत्यात्मानम् । हाग्रामनवस्थिते चञ्चले, हाग्राघ स्तिमिते निश्चले, तथा हग्रां मूढे विषयग्रहविधुरे, हाग्राच घूर्णमाने विषय ग्रहायोद्यते, नयने यस्य सः ।

(२) अहो अवशेन एतेनात्मना लज्जापितास्मि भगवत्यास्तमसायाः, किमिति किल एषा मंस्यते एष परित्यागः एषोऽभिषङ्ग इति । लज्जापिता लज्जयातिक्रामिता । आतश्च तेनातिक्रामती त्यनेनापुः । किमिति किम् । अभिषङ्गः सम्यक्सङ्गः । अभिषङ्ग स्त्वभिभवे सङ्गआक्रोशनेऽपिचेति वैजयन्ती । परित्यागो रामस्य, अभिषङ्गः सीताया इत्यर्थः तादृशपरित्यागानन्तरमीदृगभिषङ्गोऽनुचित इति भावः ।

---

* मरुता प्रविधूता कम्पिता अम्भसा वृष्टिजलेन सिक्ता चेति क्रमेणान्वयः ।

सीता। सच्चं अकरुणह्मि,जा एव्वं तुमं पेक्खन्ती धरामि ज्जेव जीअं (१)

रामः। क्कासि प्रसीद देवि! न मामेवंविधं परित्यक्तुमर्हसि।

सीता। अइ अज्जउत्त विवरीदं विअ एदं।(२)

वासं। देव प्रसीद प्रसीद, स्वेनैव लोकोत्तरेण धैर्य्येण संस्तभ्ययातिभूमिगतविप्रलम्भ * मात्मानं, कुतोऽत्र प्रियसखी मे सीता।

रामः। व्यक्तं नास्ति, कथमन्यथा वासन्त्यपि तां न पश्येत्, अपि खलु स्वप्नएष स्यात्, नचास्मि प्रसुप्तः, कुतोवा रामस्य निद्रा, सर्व्वथा सएवैष भगवाननेकवारपरिकल्पितनिर्म्मिता विप्रलम्भः पुनःपुनरनुबध्नाति। †

सीता। मएज्जेव दारुणाए विप्पलद्धो अज्जउत्तो। (३)

---

(१) सत्यमकरुणास्मि,या एवंविधं त्वां पश्यन्ती धराम्येव जीवम्

(२) अयि आर्य्यपुत्र विपरीतमिवेदं। परित्यागस्य भवतैव कृतत्वादितिभावः।

(३) मयैव दारुणया विप्रलब्ध आर्य्यपुत्रः। मयैवेति विप्रलम्भस्य नायं दोष इत्यर्थः।

---

* अतिभूमिगतविप्रलम्भं परसीमाप्राप्तवियोगदुःखम्।

† भगवानिति सोल्लुण्ठनोक्तिः। अनेकवारं परिकल्पितस्य भ्रमविषयस्य सीतास्पर्शस्य निर्म्माता सम्पादकः, निर्म्मित इति पाठे अनेकवारपरिकल्पितो निर्म्मितोयेनेति बहुव्रीहिः। अनु-"बध्नाति मोहयति"।

वास। देव पश्य पश्य।

पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः
पश्यैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः।
खड्गच्छिन्नजटायुपक्षतिरितः,* सीतां ज्वलन्तीं वह-
न्नन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिः॥ *

सीता। सभयम्। अज्जउत्त तादो वावादीअदि, अहम्पि अवहरीआमि, परित्ताहि परित्ताहि। (१)

रामः। सवेगमुत्थाय। आः पाप! तातप्राणसीतापहारिन् क्व यासि।

वास। अयि देव राक्षसकुलप्रलयधूमकेतो! अद्यापि ते मन्युविषयः?। †

सीता। अह्मो उम्मत्तिम्हि संवुत्ता। (२)

---

(१) आर्य्यपुत्र! तातो व्यापाद्यते, अहमप्यपह्रिये, परित्रायस्व परित्रायस्व। तातो जटायुः, व्यापाद्यते विनाश्यते।

(२) अहो उन्मत्तास्मि संवृत्ता। उन्मादोऽत्र अतीतस्य वर्त्तमानत्वभ्रमः।

---

* पौलस्त्यस्य रावणस्य। विघटितोभग्नः। कार्ष्णायसः कृष्णलौहनिर्म्मितः, पश्यैते इत्यत्र तेचैते इति क्वचित्पाठः, कङ्कालशेषाः अस्थिमात्रावशिष्टाः। खरारथस्य वाहकभूता गर्द्दभाः। इतोऽत्र रावणस्य खड्गेन छिन्ना जटायोः पक्षतिः पक्षमूलम् अस्तीति शेषः। जटायुशब्द उकारान्तः सान्तश्च। अन्तर्मध्ये व्याकुला चञ्चला विद्युद्यस्य सः। अरीरावणः।

† मन्युविषयः क्रोधाधारोरावणः किमस्तीति शेषः।

रामः। अन्वर्थ एवायमधुना प्रलापो वर्त्तते।

उपायानां भावादविरतविनोदव्यतिकरै
र्विमर्द्दैर्वीराणां जगति जनितात्यद्भुतरसः।
वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्,
कथं तूष्णीं सह्यो निरवधिरिदानीन्तु विरहः॥ †

सीता। णिरवधित्ति हा हदह्मि मन्दभाइणी। (१)

इति रोदिति।

रामः। हा कष्टं।

व्यर्थं यत्र कपीन्द्रसख्यमपि मे, वीर्य्यं हरीणां वृथा,
प्रज्ञा जाम्बवतोऽपि, यत्र न गतिः पुत्रस्य वायोरपि।
मार्गं ‡ यत्र न विश्वकर्मतनयः कर्त्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये तत्र प्रिये क्वासि भोः॥§

---

(१) निरवधीति हा हतास्मि मन्दभागिनी। हतास्मीति पुनः प्राप्तिसम्भावनाया निरवधिपदेनोच्छेदादिति भावः।

---

* अन्वर्थः सार्थकः प्रलापोऽनर्थकं वच इति कोषात् वस्तुत एव निरर्थक इत्यर्थः अत्र अन्यथैवेतिपाठो न सम्यक्।

† उपायानां भावात् सुग्रीवादिसहायानां सद्भावात् अविरतः सततं प्रवृत्तोविनोदस्यामोदस्य विरहदुःखापनोदनस्य वा व्यतिकरः सम्पर्कोयेषु तैः। रिपुघातावधिरिति रावणवधानन्तरमेव सीताया लाभादितिभावः। तूष्णीं निर्व्यापारेण सता।

‡ मार्गं सेतुरूपम्।

§ भोः प्रिये तत्र क्व कस्मिन् प्रदेशे, असि इदानीं वर्त्तसे इत्यन्वयः। भोरित्यत्र मे इति पाठो न सम्यक्।

सीता। बहुमाणाविदह्मि तं पुव्वविरहं। (१)

रामः। सखि वासन्ति! सुहृदामिदानीं दुःखायैव रामस्य दर्शनं, तदिदं कियच्चिरं त्वां रोदयिष्यति, तदनुजानीहि मां गमनाय।

सीता। सोद्वेगं तमसामवलम्ब्य। भअवदि तमसे! गच्छदि ज्जेव अज्जउत्तो। (२)

तम। वत्से समाश्वसिहि समाश्वसिहि, नन्वावामप्यायुष्मतोः कुशलवयोर्वर्षवर्द्धनमङ्गलानि सम्पादयितुं भागीरथीपदान्तिकमेव गच्छावः।

सीता। भअवदि! पसीद, खणमेत्तंपि दाव दुल्लहं जणं पेक्खामि। (३)

रामः। अस्ति चेदानीमश्वमेधाय सहधर्मचारिणी मे।

सीता। साक्षेपं स्वगतम्। अज्जउत्त का? (४)

रामः। हिरण्मयी सीतायाः प्रतिकृतिः।

सीता। सोच्छासं सास्रम्। अज्जउत्तोदाणीं सि तुमं, अह्मे उक्खाणिदं दाणीं मे परिच्चाअलज्जासल्लं अज्जउत्तेण। (५)

---

(१) बहुमानयामि तं पूर्व्वविरहम्।

(२) भगवति तमसे! गच्छत्येवार्य्यपुत्रः।

(३) भगवति! प्रसीद क्षणमात्रमपि तावत् दुर्लभं जनं पश्यामि।

(४) आर्य्यपुत्र का।

(५) आर्य्यपुत्र इदानीमसि त्वम्, अहो उत्खातमिदानीं मे परित्यागलज्जाशल्यमार्य्यपुत्रेण। त्वमिदानीमार्य्यपुत्रोऽसि वल्लभो भवसि परित्यक्तवतोऽपि मत्प्रतिकृताविवानुरक्तत्वेनापरित्यागित्वादितिभावः। दाणींसि इत्यत्र दाणींपि इति पाठः सम्यक्। परिच्चाअलज्जासल्लमित्यत्र परिवाअसल्लमिति क्वचित्पाठः। परिवाद शल्यमित्यर्थः।

राम। तत्रापि तावद्दाक्ष्यदिग्धं चक्षुर्विनोदयामि।

सीता। धण्णा सा, जा अज्जउत्तेण वज्जमण्णाअदि, जा अ अज्जउत्तं विणोदअन्ती आसाणिबन्धणं जादा जीअलोअस्स। (१)

राम। सस्मितस्नेहास्रं परिष्वज्य। अयि वत्से! एवमात्मा स्तूयते। *

सीता। सलज्जमधोमुखी स्वगतं। परिहसिदह्मि भअवदीए तमसाए। (२)

वास। महानयं व्यतिकरोऽस्माकं प्रमादः †। गमनं प्रति। पुनर्यथा कार्य्यहानिर्न भवति तथास्ताम्।

सीता। पडिऊला दाणीं मे वासन्दी संवुत्ता। (३)

राम। वत्से! एहि गच्छावः।

---

(१) धन्या सा, या आर्य्यपुत्रेण वज्जमन्यते, याच आर्य्यपुत्रं विनोदयन्ती आशानिबन्धनं जाता जीवलोकस्य। तत्रापि तावदित्यादि पूर्व्वोक्तरामवाक्ये तत्रापि नायिकान्तरे इत्यर्थभ्रमेण निर्व्विण्णायाः सीतायावचनमिदम्। आशानिबन्धनमिति भूपतिप्रणयास्पदत्वेन सर्व्वेषामुपकारक्षमत्वादिति भावः।

(२) परिहसितास्मि भगवत्या तमसया।

(३) प्रतिकूलेदानीं मे वासन्ती संवृत्ता। प्रतिकूलेति रामस्य गमनानुमतिरूपाप्रियकर्म्मकारित्वादिति भावः।

---

* आत्मा स्तूयतइति स्वप्रतिकृतेरेव चक्षुर्विनोदनाधारतया रामेणोक्तत्वादिति भावः।

† अयमस्माकं व्यतिकरः सम्पर्कः महान् प्रमादः भवतोमनोदौर्व्बल्यजनकः अस्मद्दर्शनेनैव सीतायाः स्मरणादिति भावः।

सीता। कहम्। एव्वं करेह्म। (१)

राम। कथमन्यथा गम्यते, यस्यास्तव।

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः।
मर्म्मच्छेदपरैर्यत्नैराकर्षोन समाप्यते॥ *

सीता। णमोणमो अकिदपुण्णजणादंसणीआणं अज्जउत्त चरणकमलाणं। (२)

इति मूर्च्छति।

राम। वत्से! समाश्वसिहि समाश्वसिहि।

सीता। समाश्वस्य। किअच्चिरं वा मेहन्तरेण पुण्णिमा चन्दस्स दंसणं। (३)

राम। अहो संविधानकम् †।

---

(१) एवं कुर्म्मः।

(२) नमोनमोऽकृतपुण्यजनादर्शनीयानामार्य्यपुत्रचरणकमलानाम्।

(३) कियच्चिरं वा मेघान्तरेण पूर्णिमाचन्द्रस्य दर्शनम्। मेघान्तरेण मेघावकाशेन।

---

* मर्म्मच्छेदपरैर्मर्म्मपीडाकरैरत्यधिकैरपीत्यर्थः। आकर्ष आकर्षणं स्वस्मिन्नानयनमित्यर्थः, न समाप्यत इत्यत्र हेतुगर्भविशेषणमाह तृष्णादीर्घस्येति दीर्घस्य सूत्रादेराकर्षणं हि झटिति समाप्यं न भवति। समाप्यत इत्यत्र निरुध्यत पाठोन मनोरमः।

† अहो संविधानकम् आश्चर्यं सम्यग्विधिविलसितं विधिक्रमेन भावानां विभिन्नरूपत्वमाश्चर्य्यमित्यर्थः, एतदेव दर्शयति एकोरसइति।

एकोरसः करुणएव निमित्तभेदा
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान् ।
आवर्त्तबुद्बुदतरङ्गमयान् विकारा
नम्भोयथा,सलिलमेवतु तत्समग्रम् ॥ *

रामः । अयि विमानराज इतइतः ।

इति सर्व्वे उत्तिष्ठन्ति ।

तमसावासन्त्यौ सीतारामौ प्रति ।

---

* एक इत्यादि करुणः करुणविप्रलम्भरतिरेकैवेत्यर्थः सच निमित्तभेदात् तत्तदुद्दीपनभेदात् भिन्नः भिन्नइव प्रतीयमानः सन् पृथक्पृथगिव भिन्नभिन्नानिव, परस्परं वैपरीत्येन वर्त्तन्तइति विवर्त्तास्तत्तद्व्यभिचारिणः तान् आश्रयन्ते स्वपोषकत्वेन प्राप्नुवन्ति, तत्तदुद्दीपनोद्बोधिततत्तद्व्यभिचारिसंसर्गेण एकोऽपि करुणविप्रलम्भोभिन्नभिन्नतया प्रतीयतेइति निर्गलितोऽर्थः । तथाहि सीतायाः मरज्जेव दारुणाय इत्यादौ विषादः,तादेवावादीअदीत्यादावुन्मादः निरवधिस्त्तीत्यादौ दैन्यं, बऊमसाविदस्त्रीत्यादौ मतिः, गच्छदिन्नेवेत्यादावौत्सुक्यं, प्पसीद खरामेत्तमित्यादौ हर्षः, उक्खाबिदमित्यादौ धृतिः,घस्सासेत्यादावीर्ष्या,परिहसिदस्त्रीत्यादौ लज्जा, पडिऊलेत्यादावसूया, यामोयामइत्यादौ निर्व्वेदः, एवमेतैर्व्यभिचारिभिः पृथक् पृथक् संयुक्ततया करुणविप्रलम्भः पृथक् पृथगिव प्रतीयते वस्तुतस्त्वेकएवेत्यर्थः । दृष्टान्तेनेदं द्रढयति आवर्त्तेत्यादि । आवर्त्तोम्भमिः बुद्बुदोविम्बं । सलिलमेवत्विति प्रक्रमभङ्गः सोढव्यो कवीनां निरङ्कुशत्वात् ।

अवनिरमरसिन्धुः सार्द्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता ।
सच मुनिरनुयातारुन्धतीको वशिष्ठ
स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय ॥ *

इति निष्क्रान्ताः सर्व्वे ।

इति छायानाम तृतीयोऽङ्कः ।

---

* आद्यः कुलपतिः सूर्य्यः । छन्दसां वेदानां । भद्रं सौभाग्य जनकमदृष्टं । मङ्गलाय उत्तरकालीनसौभाग्याय । त्वयीति संप्रदानत्वाविवक्षया अधिकरणत्वविवक्षया सप्तमी ।

अथ चतुर्थोऽङ्कः ।

ततः प्रविशतस्तापसौ ।

एकः । सौधातके ! दृश्यतामद्य भूयिष्ठसन्निधापितातिथिजनस्य समधिकारम्भरमणीयता भगवतोवाल्मीकेराश्रमपदस्य । *

तथाहि ।

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूताप्रिया-
पीतादप्यधिकं तपोवनमृगः पर्य्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतोभक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्य्यते ॥ †

* भूयिष्ठमविरलं सन्निधापिताः संनिवेशिता अतिथिजना यत्र तस्य । समधिकोाय आरम्भः अतिथिपरिचर्य्यायै पाकादि क्रियोद्योगस्तेन रमणीयता ।

† सद्यःप्रसूता तद्दिनजातप्रसवा या प्रिया मृगी । पुंवत्प्रिया दाविति पुंवद्भावनिषेधः । तया पीतान्मण्डादधिकमवशिष्टं नीवारौदनमण्डं पाकस्थानाद्बहिर्निःसृतमितिशेषः पर्य्याप्तं प्रकाम माचामति पिवति । तथा सर्पिष्मतः सघृतस्य भक्तस्यान्नस्य स्फुरता गन्धेन मनागनुसृतः किञ्चिन्मिश्रितः कर्कन्धूफलमिश्रशाकपचनामोदः वदरफलसहितवास्तूकादिशाकपाकगन्धः परिस्तीर्य्यते सर्व्वतः प्रसरति ।

सैाधा। आश्रदं अणज्झाअकारणं सविसेसभूदं अज्ज जिणकुचाणं। (१)

प्रथमः। विहस्य। अपूर्व्वः कोऽपि ते वड्डमानहेतुर्गुरुषु सैाधातके! *

सैाधा। भो भाण्डाअण किं णामधेओ एसो महन्तस्स त्थविरसत्थस्स धुरन्धरो अज्ज अदिधी आअदो। (२)

भाण्डायनः। धिक् प्रहसनं †। नन्वयमृष्यशृङ्गाश्रमाद-रुन्धतीपुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भग-वान् वशिष्ठः प्राप्तस्तत्किमेवं प्रलपसि।

सैाधा। हुं वसिट्ठो। (३)

भाण्डा। अथ किम्।

सैाधा। मए उण जाणिदं,वग्घो वा विओ वा एसोत्ति (४)

---

(१) आगतमनध्यायकारणं सविशेषभूतमद्य जीर्णकूर्चानाम्। अद्य जीर्णकूर्चानां पक्वश्मश्रूणां वृद्धानामित्यर्थः आगतमागमनं, भावे क्तः उद्देश्यपदमिदं। सविशेषभूतं विशेषेण अनध्यायकारणं जातमिति शेषः।

(२) भो भाण्डायन किं नामधेय एष महतः स्थविरसार्थस्य धुरन्धरोऽद्यातिथिरागतः। स्थविरसार्थस्य वृद्धसमूहस्य धुरन्धरः प्रधानम्।

(३) हुं वशिष्ठः।

(४) मया पुनर्ज्ञातं, व्याघ्रो वा वृको वा एष इति।

---

* अपूर्व्व इति सोल्लुण्ठनोक्तिः। वड्डमानहेतुः सम्मानसूचकः वाक्प्रयोग इति शेषः। वड्डमान इत्येव पाठः सम्यक्।

† धिक् प्रहसनं गुरून् प्रत्युपहसनं धिक् निन्दितमित्यर्थः।

भाण्डा । आः किमुक्तं भवति ? ।

सैाधा । तेण परावडिदेणज्जेव सा वराइआ कल्लाणिआ मड़मड़ाइदा । (१)

भाण्डा । समांसोमधुपर्कइत्याम्नायं बहुमन्यमानाः श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षम्बा महाजम्बा निर्वपन्ति गृहमेधिनः, तं हि धर्म्मसूत्रकाराः समामनन्ति ।

सैाधा । भो णिग्गहीदोसि । (२)

भाण्डा । कथमिव ।

सैाधा । जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा, अज्जज्जेव पच्चागदस्स राएसिणो जणअस्स भअवदा वम्मीएणवि दहिमहूहिं ज्जेव णिव्वत्तिदो मदुवक्को, वच्छदरी उण विसज्जिदा । (३)

---

(१) तेन परापतितेनैव सा वराकिका कल्याणिका मड्मडायिता । परापतितेनैव समागतेनैव । वराकिका दीना । कल्याणिका गौः वत्सतरीत्यर्थः । कल्याणी मायपर्णी गौरिति राजनिर्घण्टः । कल्लोडिआ इति पाठस्तु न मनोरमः । मड्मडायिता सशब्दं भक्षिता ।

(२) भो निग्रहीतोऽसि । स्वमतं संस्थापयितुमशक्नुवन् धिक्कृतोऽसीत्यर्थः ।

(३) येन आगतेषु वशिष्ठमिश्रेषु वत्सतरी विशसिता, अद्यैव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिनापि दधिमधुभिरेव निर्व्वर्त्तितो मधुपर्कः । वत्सतरी पुनर्विसर्ज्जिता । दधिमधुभिरिति तथाच मधुपर्कप्रस्तावे आश्वलायनः दधिमधुनी सर्पिर्मैध्वलाभे इति ।

भाण्डा । अनिवृत्तमांसानामेवं कल्प * मृषयोमन्यन्ते, निवृत्तमांसस्तु तत्रभवान् जनकः ।

सोधा । किं णिमित्तं । (१)

भाण्डा । स तदैव देव्याः सीतायास्तादृशं दैवदुर्व्विपाकमुपश्रुत्य वैखानसः † संवृत्तः, तथास्य कतिपये संवत्सरा ‡ श्चन्द्र द्वीपतपोवने तपस्तप्यमानस्य ।

सोधा । तदो किंत्ति आअदो । (२)

भाण्डा । चिरन्तनप्रियसुहृदं प्राचेतसं द्रष्टुम् ।

सोधा । अवि अज्ज सम्बन्धिणीहिं समं संवुत्तं से दंसणं णवत्ति । (३)

भाण्डा । संप्रत्येव भगवता वशिष्ठेन देव्याः कौशल्यायाः सकाशं भगवत्यरुन्धती प्रहिता, यत्स्वयमुपेत्य वैदेहोद्रष्टव्य इति वक्तुम् ।

सोधा । जधा एदे त्थविरा परप्परमिलिदा, तधा अ-

(१) किं निमित्तम् ।

(२) ततः किमित्यागतः ।

(३) अप्यद्य सम्बन्धिनीभिः समं संवृत्तमस्य दर्शनं नवेति । सम्बन्धिनीभिर्वैवाहिकसम्बन्धवतीभिः कौशल्यादिभिः । दर्शनं दर्शनपूर्व्वकसंलापः ।

* एवं कल्पं समांसमधुपर्कविधिम् ।

† वैखानसो वानप्रस्थः ।

‡ कतिपये द्वादश संवत्सराः अतीताइति शेषः ।

अम्हेवि वटुकेहिं समं मिलिअ अणज्झाअमहूसवं खेलन्ता सम्भावेम । (१)

इति परिक्रामतः ।

भाण्डा । तदयं ब्रह्मवादी पुराणराजर्षिर्जनकः प्राचेतसवशिष्ठावुपास्य संप्रत्याश्रमवहिर्वृक्षमूलमधितिष्ठति, य एषः ।

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते ।
अन्तःप्रसुप्तदहनोज्ज्वलन्निव वनस्पतिः । *

इति निष्क्रान्तौ । विष्कम्भकः ।

ततः प्रविशति जनकः ।

जन । अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नवइव चिरेणापि हि न मे
निकृन्तन्मर्म्माणि क्रकचइव मन्युर्विरमति ॥ †

कष्टमेवं नाम जरसा दुःखेन च दुरासदेन भूयः पराक-

(१) यथा एते स्थविराः परस्परमिलिताः, तथा वयमपि वटुकैः समं मिलित्वा अनध्यायमहोत्सवं खेलन्तः सम्भावयामः । सम्भावयामो मानयामः ।

* नित्यानुषक्तेन सदासन्निहितेन । ज्वलन् लोप्रमनुभवन् वनस्पतिः शमीवृक्षइव ।

† अपत्ये कन्यायां । दुरितं वने परित्यागरूपमनिष्टं । विषक्तोजनितः । पटुस्तीव्रः । धारावाही अविच्छेदमनुभूयमानः । चिरेणापि अतिपूर्व्वमुत्पन्नोऽपि नवइव नूतनत्वेन प्रतीयमानः । मन्युः शोकः ।

सान्तपनप्रभृतिभिस्तपोभिरात्तरसधातुरनुपयुज्यमानो * ना-द्यापि मे दग्धदेहः पतति, अन्धतामिस्रा ह्यसूर्य्या नाम ते लोकास्तेभ्यः प्रतिविधीयन्ते † य आत्मघातिन इत्येवमृषयो मन्यन्ते, अनेकसंवत्सरातिक्रमेऽपि च प्रतिक्षणपरिभावनास्पष्ट निर्भासः प्रत्यग्रइव ‡ दारुणेन मे दुःखसंवेगः प्रशाम्यति। अयि मातर्देवयजनसम्भवे देवि सीते! ईदृशस्ते निर्म्माणभागः परिणतः, येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते § हाहा पुत्रि!

अनियतरुदितस्मितं विराजत्
कतिपयकोमलदन्तकुड्मलाग्रम्।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जुजल्पितं ते॥

---

* आत्तोगृहीतः शोषित इत्यर्थः रसरूपधातुर्येन सः अनुप-युज्यमानः शक्तस्याव्यापाराक्षमः।

† ननु दुःखाधारं देहं स्वयं कथं न त्यजसीत्याशङ्क्याह अन्ध-तामिस्रा इत्यादि। तेभ्यस्तानुद्दिश्य। प्रतिविधीयन्ते तत्पापप्रती-काराय निर्द्दिश्यन्ते।

‡ प्रतिक्षणं परिभावनया चिन्तया स्पष्टः प्रस्फुटो निर्भासः स्फुर-णं यस्य सः अतएव प्रत्यग्रइव नूतनइव।

§ निर्म्मीयते यदिति निर्म्माणं शरीरं तस्य भागोभाग्यं शरी-रारम्भकमदृष्टमित्यर्थः ईदृशः परिणतः परिणामेऽयशःप्रति-पादनेनातिदुःखदोजातः। लज्जया पतिपरित्यागेन दुश्चरित्रां शङ्कियमाणेभ्यो लोकेभ्यस्त्रपया, स्वच्छन्दमाक्रन्दितुं दीर्घस्वरं रोदि-तुम्। शक्यत इति भावप्रयोगः।

भगवति वसुन्धरे ! सत्यमतिदृढ़ासि ।

त्वं वह्निर्मुनयो वशिष्ठगृहिणी गङ्गाच यस्याविदु
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।
विद्यां वागिव यामसूत भवती, शुद्धिं गतायाः पुर *
स्तस्यास्त्वं दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः ॥ †

नेपथ्ये । इतइतो भगवतीमहादेव्यौ ।

जनकः । दृष्ट्वा अये गृष्टिनो ‡ पदिश्यमानमार्गा भगवत्यरुन्धती । उत्थाय । कां पुनर्महादेवीत्याह । निरूप्य । हा कथं महाराजदशरथस्य धर्मपत्नी प्रियसखी मे कौशल्या, क एवं प्रत्येति सैवेयमिति ।

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेववा किमुपमानपदेन, सैषा ।
कष्टं वतान्यदिव दैववशेन जाता
दुःखात्मकं किमपि भूत,महो विपाकः ॥ §

अयमपरप्रायो ¶ दशाविपर्य्यासः ।

---

* शुद्धिं गतायाः पुरः इत्यत्र तदन्तु या दैवतमिति क्वचित्पाठः तत्र तद्वत् वह्न्यादयइव या सीता दैवतं देवतेत्यर्थः ।

† विशसनं विनाशनमतिदुःखदानमित्यर्थः । अमृष्यथाः सोढवती । परित्यागसमये किमिति रामं न न्यवारय इत्यर्थः ।

‡ गृष्टिना गृष्टिनामकेन दशरथस्य कञ्चुकिना ।

§ उपमानपदेन उपमावाचकयथाशब्दप्रयोगेन, कष्टंवतेत्यतिखेदे । दुःखात्मकं दुःखभोगवत्सलमन्यत् किमपि भूतं पिशाचशरीरवती जातेत्यन्वयः । विपाकः प्रारब्धपरिणामः ।

¶ अपरप्रायोऽन्यइव ।

स एव मे जनः पूर्व्वमासीन्मूर्त्तो महोत्सवः।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम्॥

ततः प्रविशत्यरुन्धती कौशल्या कञ्चुकी च।

अरु। ननु ब्रवीमि, द्रष्टव्यः स्वयमुपेत्य वैदेह इत्येष वः कुलगुरोरादेशः, अतएवाहं प्रेषिता, ततः कोऽयं पदे पदे महानध्यवसायः *।

कञ्चु। देवि! संस्तम्भयात्मानम्, अनुरुध्यस्व भगवतो वशिष्ठस्यादेशमिति विज्ञापयामि।

कौश। ईदिसे काले मिथिलाधिवो दट्ठव्वोत्ति समं ज्जेव सव्वाइं दुक्खाइं समुब्भवन्ति, ण सक्कणोमि उव्वत्तमाण-मूलवन्धणं हिअअं अवत्थाविदुं (१)

अरु। अत्र कः सन्देहः।

सन्तानवाहीन्यपि † मानुषाणां दुःखानि सद्बन्धुवियोगजानि।
दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते ‡॥

---

(१) ईदृशे काले मिथिलाधिपो द्रष्टव्य इति सममेव सर्व्वाणि दुःखानि समुद्भवन्ति। न शक्नोमि उद्वर्त्तमानमूलबन्धनं हृदय-मवस्थापयितुम्। उद्वर्त्तमानमूलबन्धनमधैर्य्यविसंष्ठुलम्।

---

* महानध्यवसाय इति समस्तमेकपदं, स्वयं गमने अत्यन्तानिश्चय इत्यर्थः।

† सन्तानवाहीन्यपि धारावाहिकतया प्रवृत्तान्यपि सततम-नुभूयमानान्यपीत्यर्थः।

‡ स्रोतःसहस्रैरसंख्यैर्मुखैरिव संप्लवन्ते समन्तात्प्रसरन्ति वर्द्धीभवन्तीत्यर्थः।

कौश । कधं वच्छाए वहूए एवं गदे तस्स राएसिणो मुहं दंसअह्म । (१)

अह । एष वः श्लाघ्यसम्बन्धी * जनकानां कुलोद्वहः ।
याज्ञवल्क्योमुनिर्यस्मै ब्रह्मपारायणं † जगौ ॥

कौश । एसो सो महाराअस्स हिअआणन्दो वच्छाए वहूए पिदा राएसी, हद्धी हद्धी सम्भाविदह्मि अनुट्ठिदमहूसवे दिअहे । हा देव्व सव्वं ज्जेव तं णत्थि । (२)

जनकः । उपसृत्य । भगवत्यरुन्धति ! वैदेहः सीरध्वजोऽभिवादयते ।

यया पूतम्मन्योनिधिरपि पवित्रस्य महसः
पतिस्ते पूर्व्वेषामपि खलु गुरूणां गुरुतमः ।

---

(१) कथं वत्साया वध्वा एवं गते तस्य राजर्षेर्मुखं दर्शयामः एवं गते दैवदुर्विपाके भूते । राजर्षेरिति प्रयोज्यकर्म्मणि सम्बन्धविवक्षायां षष्ठी । मुखं स्वमुखम् ।

(२) एष स महाराजस्य हृदयानन्दोवत्साया वध्वाः पिता राजर्षिः । हा धिक् हा धिक् सम्भावितास्मि अनुष्ठितमहोत्सवे दिवसे, हा दैव ! सर्व्वमेव तन्नास्ति । महाराजस्य दशरथस्य । सम्भावितास्मि अनेनागत्य सम्मानितास्मि । रूव्वमेव महाराजो वधूमहोत्सवस्य ।

---

* श्लाघ्यसम्बन्धो प्रशंसनीयवैवाहिकसम्बन्धवान् ।

† ब्रह्मणः पारः स्वरूपाधिगमः तस्यायनं प्राप्तिर्यतस्तत् वेदान्तभागमित्यर्थः जगौ अध्यापयामास ।

त्रिलोकीमङ्गल्यामवनितललोलेन शिरसा
जगद्वन्द्यां देवीमुषसमिव * वन्दे भगवतीम्॥

अरु। परं ज्योति † स्ते प्रकाशताम्, अयं स त्वां पुनातु देवः परोरजा ‡ यएष तपति।

जन। आर्य्ये गृष्टे! अपि कुशलमस्याः प्रजापालस्य मातुः।

कञ्चु। निर्व्विशेषमतिनिष्ठुरमुपालब्धाः स्मः, § राजर्षे! अनेनैव मन्युना अचिरपरित्यक्तरामभद्रमुखचन्द्रदर्शनां नार्हसि त्वं दुःखयितुमतिदुःखितां देवीम्। रामभद्रस्यापि दैवदुर्नियोगः कोऽपि, यत् किल समन्तात्प्रवृत्तवीभत्सकिंवदन्तीकाः ¶ पौरजानपदा नाग्निपरिशुद्धिमप्यल्पकाः ** प्रतिपद्यन्ते इत्यतोदारुणमनुष्ठितम्।

---

* देवीमित्यस्य पूर्व्वं तामिति योज्यं पूर्व्ववाक्ये ययेति श्रवणात् उषसमिव प्रभातसन्ध्यामिव, सा हि सर्व्वैर्वन्द्यते।

† परं ज्योतिर्ब्रह्म।

‡ देवः सूर्य्यः परोरजा रजसः परः प्रकाशकत्वात् विशुद्धसत्वमूर्त्तिरित्यर्थः। निपातनसिद्धोऽयं प्रयोगः।

§ निर्व्विशेषं सर्व्वप्रकारेण, अत्र निरवशेषमिति पाठः सम्यक् संपूर्णमित्यर्थः। अतिनिष्ठुरमिति प्रजापालस्य मातुरित्युक्त्या क्रोधप्रकाशनादितिभावः, स्नेहपूर्व्वककुशलानुप्रश्ने हि रामभद्रस्य मातुरिति, प्रियसख्या इतिवाभिदध्यादिति बोध्यम्। उपालब्धास्तिरस्कृताः।

¶ समन्तात् प्रवृत्ता वीभत्सा गर्हिता सीतापवादविषयिका किंवदन्ती येभ्यस्ते।

** अल्पकाः क्षुद्राः।

जन। आः, कोऽयमग्निर्नामास्मत्प्रसूतिपरिशोधने, कष्टमेवंवादिना जनेन रामपरिभूता अपि वयं पुनः परिभूयामहे।

अरु। एवमेतत्, अग्निरिति वत्सां प्रति परिलघून्यक्षराणि, सीतेत्येव * पर्य्याप्तम्। हा वत्से!

शिशुर्व्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढ़यति।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतो
गुणाः पूजास्थानं गुणिषु नच लिङ्गं नच वयः † ॥

कौश। अम्मो उम्मीलन्ति वेअणाओ। (१)

इति मूर्च्छति।

जन। हा कष्टं किमेतत्।

अरु। राजर्षे! किमन्यत्।

स राजा ‡ तत्सौख्यं सच शिशुजन, § स्तेच दिवसाः,
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम्।

---

(१) अम्म उन्मीलन्ति वेदनाः। अम्मेति दुःसहे। विस्मये दुःसहेऽप्यम्मोनित्यं स्त्रीभिः प्रयुज्यत इति भरतः।

---

* सीतेत्येवेति विशुद्धिमत्स्त्रीविशेषे सीताशब्दस्य रूढत्वादितिभावः।

† स्त्रैणं स्त्रीत्वम्। लिङ्गं पुंस्त्वादिकम्।

‡ सराजा दशरथः स्वाधीनः स्वामीतिशेषः।

§ शिशुजनः बालिका वधूः सीता।

विपाके घोरेऽस्मिन्नथ * खलु विमूढ़ा तव सखी,
पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥

जन । कष्टं कष्टं, सर्व्वथा नृशंसोऽस्मि, यश्चिरस्य दृष्टान् प्रियसुहृदः प्रियदारान् न स्निग्धं पश्यामि ।

स सम्बन्धी श्लाघ्यः, प्रियसुहृदसौ, तच्च हृदयं,
सचानन्दः, साक्षादपिच निखिलं जीवितपदम् ।
शरीरं, जीवोवा, यदधिकमितो वा प्रियतरं
महाराजः श्रीमान् किमिव मम नासीद्दशरथः † ॥

कष्टमियमेव सा कौशल्या ।

यदस्याः पत्युर्व्वा रहसि परमं दूषितमभू
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः ।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू
दलम्बा तत् स्मृत्वा दहति यदवस्कन्द्य हृदयम् ‡ ॥

अह । हा कष्टमतिचिरनिरुद्धनिश्वासनिष्ठुरं § हृदयमस्याः ।

---

* अथ स्मरणानन्तरम् ।

† तच्च दशरथ इत्यर्थः हृदयं हृदयविश्रामस्थानं, तच्चेति विधेयाधीनत्वात् नपुंसकं । आनन्दः आनन्दजनकः, जीवितपदं जीवनस्य स्वास्थ्यकरस्थानं । जीवितफलमिति पाठे दशरथएव मम जीवनपरिग्रहस्य फलरूपतया परिणत इत्यर्थः । शरीरं जीवोवेति प्रेम्णा शरीरयोर्जीवनयोश्चाभिन्नत्वादितिभावः । इतआभ्यां यदधिकं प्रियतरं वस्तु यदि स्यादिति शेषः तदा तदपि दशरथएवेत्यर्थः ।

‡ दूषितं दोषः । उपालम्भविषयः दोषविज्ञापनस्थानं । अवस्कन्द्य आक्रम्य ।

§ अतिचिरनिरुद्धेन निश्वासेन निष्ठुरं व्याकुलं । निष्ठुरमित्यत्र निश्चलमिति क्वचित्पाठः ।

जन। हा प्रियसखि! इति कमण्डलूदकेन सिञ्चति।

कञ्चु। सुहृदिव प्रकटय्य सुखप्रदां

प्रथममेकरसा * मनुकूलताम्।

पुनरकाण्डविवर्त्तनदारुणः प्रवि-

शिनष्टि विधि † र्मनसोरुजम्॥

कौश। संज्ञां लब्ध्वा। हा वच्छे जाणइ कहिंसि, सुमरामि दे विआहलच्छीपरिग्गहेक्कमण्डणं पप्फुरन्तमुद्धहसिदमुद्धमुहपुण्डरीअं, आफुरन्तकोमुदचन्दचन्दिआसुन्दरेहिं अङ्गेहिं उल्लासेहि, जादे पुणोवि उज्जोएहि उच्छङ्गं, सव्वदा महाराओ भणादि, एसा रहुउलमहत्तराणं वहू, अह्माणं उण जणअसम्बन्धेण दुहिदिआ ज्जेव। (१)

---

(१) हा वत्से जानकि! कुमा[illegible], स्मरामि ते विवाहलक्ष्मीपरिग्रहैकमण्डनं प्रस्फुरन्मुग्धहसितमुग्धमुखपुण्डरीकम्, आस्फुरत् कौमुदचन्द्रचन्द्रिकासुन्दरैरङ्गैरुल्लासय, जाते पुनरप्युद्योतयोत्सङ्गं, सर्व्वदा महाराजो भणति, एषा रघुकुलमहत्तराणां वधूः, अस्माकं पुनर्जनकसम्बन्धेन दुहितैव। विवाहलक्ष्मीर्विवाहसंस्कारजनितशोभा तस्याः परिग्रहएव एकमद्वितीयं मण्डनं यस्य तत्। आसम्यक् स्फुरन् यः कौमुदस्य कार्त्तिकमासस्य चन्द्रस्य या चन्द्रिका तद्वत्सुन्दरैः कोमलैः। उद्योतय शोभय। भणति कथयति जनकसम्बन्धेन मित्रस्य जनकस्य सम्पर्केण मित्रदुहिताहि दुहितेवेत्यर्थः।

---

* एकरसां स्थिराम्।

† प्रविशिनष्टि अतितरां वर्द्धयति। विधिर्दैवम्।

कञ्चु। यथाह देवी।

पञ्चप्रसूतेरपि राज्ञ आसीत् प्रियोविशेषेण सुवाङ्गशत्रुः *।
वधूचतुष्केऽपि यथैव शान्ता प्रिया तनूजास्य तथैव सीता॥

जन। हा प्रियसख महाराज दशरथ! एवमसि सर्व्वप्रकारहृदयङ्गमः कथं विस्मर्य्यसे।

कन्यायाः किल पूजयन्ति पितरोजामातुराप्तं जनं
सम्बन्धे विपरीतमेव तदभूदाराधनं ते मयि।
त्वं कालेन तथाविधोऽप्यपहृतः सम्बन्धवीजन्तु तद्
घोरेऽस्मिन् मम जीवलोकनरके पापस्य धिग्जीवितम् †॥

कौश। जादे जाणइ किं करेमि दिढ़वज्जलेवघड़िअवन्धणिच्चलं ज्जेव हृदजीविदं मं मन्दभाइणों ण परिच्चअदि। (१)

अरु। आश्वसिहि राजपुत्रि! वाष्पविश्रामोऽप्यन्तराले कर्त्तव्यएव, अन्यच्च किं न स्मरसि, यदवोचदृष्यशृङ्गाश्रमे युष्माकं कुलगुरु,स्तदुपजातमेव, किन्तु कल्याणोदर्कं ‡ भविष्यति।

---

(१) जाते जानकि! किं करोमि दृढवज्रलेपघटितवन्धनिश्चलमेव हतजीवितं मां मन्दभागिनीं न परित्यजति। किं करोमीति जीवनापगमएव त्वद्विरहदुःखप्रतीकारोपायः किन्तु स मम न घटते इत्यर्थः।

---

* पञ्चप्रसूतेः शान्तां कन्यां रामादींश्चतुरः पुत्रांश्च जनितवतः। सुवाङ्गशत्रुरामः।

† सम्बन्धवीजं वैवाहिकसम्बन्धनिदानं जीवितं धिगित्यन्वयः।

‡ कल्याणोदर्कं शुभोत्तरफलम्।

कौश । भअवदि ! अदिक्कन्तो मणोरधो । (१)

अरु । तत् किं मन्यसे राजपुत्रि ! स्वप्नोऽयं तदिति, नहीदं सुचरितेऽन्यथा मन्तव्यं, भवितव्यमेव तेन ।

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयोऽभूत् ।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतां व्याहरन्ति ॥ *

नेपथ्ये कलकलः । सर्व्वे आकर्णयन्ति ।

जन । अद्य खलु शिष्टानध्याय † इत्युद्धतं खेलतां वटूनां कलकलः ।

कौश । सुलहसोक्खं दाव वालत्तणं भोदि । (२)

निरूप्य । अम्महे ! एदाणं मज्झे को एसो रामभद्दलक्खीसरिसेहिं सावट्ठम्भमुद्धललिदेहिं अङ्गेहिं अह्माणं वि लोअणाइं सीअलावेदि । (३)

(१) भगवति ! अतिक्रान्तो मनोरथः । अतिक्रान्तोऽतीतः नपुनरागमिष्यतीत्यर्थः ।

(२) सुलभसौख्यं तावद्बालत्वं भवति ।

(३) अहो एतेषां मध्ये क एष रामभद्रलक्ष्मीसदृशैः सावष्टम्भमुग्धललितैरङ्गैरस्माकमपि लोचनानि शीतलयति । सावष्टम्भानि सबलानि मुग्धानि मनोज्ञानि ललितानि कोमलानिच तैः ।

* आविर्भूतज्योतिषां सञ्जातब्रह्मसाक्षात्काराणाम् । व्याहारा वचनानि । विप्लुतां मृषार्थां । विप्लुतां व्याहरन्तीत्यत्र विप्लुतार्थां वदन्तीति क्वचित्पाठः ।

† शिष्टानध्यायः शिष्टजनागमनादनध्यायः । तथाच मनुः अनध्यायोद्ध्यमाने समवाये जनस्य चेति ।

अरु । अपवार्य्य सहर्षोत्कण्ठं स्वगतम । इदं नाम त-द्भागीरथीनिवेदितरहस्यं कर्णामृतं,* नत्वेवं विद्मः कतरोऽ-यमायुष्मतोः कुशलवयोरिति ।

जन । कुवलयदलश्यामस्निग्धः शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्रीकः श्रियैव सभाजयन् । †
पुनरिव शिशुर्भूत्वा वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥ ‡

कञ्चु । नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये ।

जन । एवमेव, तथाहि ।

चूड़ाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरोधत्ते त्वचं रौरवीम् ।

---

* भागीरथ्या निवेदितं वाल्मीकौ समर्पितं रहस्यं सीतादारकद्वयरूपं गोप्यं वस्तु । कर्णामृतं कर्णसुखजनकसीतातनयेति-शब्दप्रतिपाद्यं । यद्वा भागीरथ्या निवेदितं मां प्रत्युक्तं रहस्यं कुशलवजन्मरूपगूढवृत्तान्तो यत्र तत् कर्णामृतं कर्णसुखदभागीरथीवचनविषयः ।

† सभाजयन् पूजयन् शोभयन्नित्यर्थः ।

‡ अमृताञ्जनम् अमृतमयाञ्जनसंसर्गजनितसुखम् ।

§ चूडाचुम्बिताश्चूडापर्य्यन्तमुच्छ्रिताः कङ्कपत्रावाणायत्र तादृशं तूणीद्वयं पृष्ठतः पृष्ठस्य अभितः उभयतः पार्श्वद्वये इत्यर्थः, तथा भस्मस्तोकानि भस्मविन्दव एव पवित्रं लाञ्छनं यस्य तत् उरो वक्षः । स्तोकस्थाने सोमेति क्वचित्पाठः । तथा रुरुर्मृगविशेषः तत्सम्बन्धिनीं त्वचं । तथा मौर्व्यां मूर्व्वातन्तुनिर्म्मितया मेखलया नियन्त्रितं सम्बद्धं माञ्जिष्ठिकं मञ्जिष्ठया रञ्जितं अधोवासः परिधानवस्त्रं च,

मौर्व्वी मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठिकं
पाणौ कार्म्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः॥ §

भगवत्यरुन्धति! किमुत्प्रेक्षसे कुतस्त्योऽयमिति।

अरु। अद्यैव वयमप्यागताः।

जन। आर्य्ये गृष्टे! अतीव मे कौतुकं वर्त्तते। तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ, इमञ्च बालकं ब्रूहि, केऽप्येते प्रवयसस्त्वां दिदृक्षव इति।

कञ्चु। यदाज्ञापयसीति निष्क्रान्तः।

कौश। किं भणध, एवं भणिदो आगमिस्सदित्ति (१)

(१) किं भणथ, एवं भणित आगमिष्यतीति। भणध इत्यत्र मणुध इति पाठः सम्यक् मन्यध्वे इति सं।

धत्ते इत्यस्य सर्व्वत्रान्वयः। किञ्चास्य पाणौ कार्म्मुकं धनुः। अक्षसूत्रस्य जपमालाया वलयं वेष्टनं, अक्षसूत्रस्य वलयं यत्रेति कार्म्मुकविशेषणं वा। अपर इति चार्थे, पैप्पल आश्वत्थोदण्डश्च अस्तीति शेषः। दण्डं तथा पैप्पलमिति पाठे तु कार्म्मुकादिकं सर्व्वमेव कर्म्मपदं धत्ते इत्यनेनान्वेति। अत्र तूणकार्म्मुकयो र्धारणं क्षत्रियमात्रचिह्नं। भस्मरक्तवस्त्राक्षसूत्रधारणञ्च ब्रह्मचारिमात्रचिह्नं। रौरवत्वगादिकधारणन्तु क्षत्रियब्रह्मचारिचिह्नं। यथाह मनुः। कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिण इति। क्षत्रियस्यतु मौर्व्वी ज्या इतिच। पैप्पलदण्डोऽपि क्षत्रियब्रह्मचारिणएव यथाह गोतमः बैल्वपालाशौ ब्राह्मणस्य दण्डावाश्वत्थपैलवौ शेषे इति शेषे क्षत्रिये, मनुनातु क्षत्रियब्रह्मचारिणां वटखदिरदण्डयोर्विधानाद्विकल्पोबोध्यः शाखिभेदविषयो वा यथा क्षत्रियेवाटखादिराविति।

अरु । भिद्येत किं मद्दृत्तमीदृशस्य निर्माणस्य ।

कौश । निरूप्य । कधं सविणअं णिसामिदगिट्ठिवअणो विसज्जिदइसिदारओ इदोऽहिमुहं पसरिदोज्जेव सोवच्छो । (१)

जन । चिरं निर्व्वर्ण्य । भोः किमप्येतत् ।

महिम्नामेतस्मिन् विनयशिशुतामौग्ध्यमसृणो
विदग्धैर्निग्राह्यो न पुनरविदग्धैरतिशयः ।
मनोमे सम्मोहः स्थिरमपि हरत्येव वलवा
नयोधातुं यद्वत् परिलघुरयस्कान्तशकलः ॥ *

प्रविश्य । लवः । स्वगतम् । अज्ञातनामक्रमाभिजनान् पूज्यानपि नः स्वतः कथमभिवादयिष्ये † । विचिन्त्य । अयं पुनरविरुद्धः प्रकारइति वृद्धेभ्यः श्रूयते । सविनयमुपसृत्य । एष वो लवस्य प्रणामपर्य्यायः ।

अरुन्धतीजनकौ । कल्याणिन्नायुष्मान् भूयाः ।

कौश । ताद मे चिरं जीव । (२)

---

(१) कथं सविनयं निशामितऋषिवचनो विसर्ज्जितर्षिदारक इतोऽभिमुखं प्रसृतएव सवत्सः ।

(२) तात मे चिरञ्जीव ।

---

* विनयेन शिशुतयाच यन्मौग्ध्यं मनोज्ञत्वं तेन मसृणः शोभमानः महिम्नामतिशय एतस्मिन् दृश्यते इत्यन्वयः । सम्मोहश्चैव जाड्यं, स्थिरमपि तत्त्वनिश्चलमपि । हरत्याकर्षति ।

† अज्ञातानि नामानि क्रमोबन्दनपौर्व्वापर्य्यम् अभिजनः कुलञ्च येषां तान् । स्वतः स्वयं स्वबुद्धितो वा ।

अरु। एहि वत्स। इति लवमुत्सङ्गे कृत्वा स्वगतं। दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथो मे संपूर्णः।

कौश। जाद इदोवि दाव एहि। उत्सङ्गे कृत्वा। अम्महे ण केवलं दरविकसन्तणीलुप्पलसामलुज्जलदेण देहबन्धेण कवलिदारविन्दकेसरकसायकण्ठकलहंसणिग्घोसघग्घरणिणाद-दीहरदीहरेण सरेण अ रामभद्दमणुहरदि, णं कठिणकमलगब्भपक्खलो सरीरप्फंसोवि तादिसोज्जेव वच्छस्स, जाद पेक्खामि दाव दे मुहं। चिवुकमुन्नमय्य निरूप्य च सवाष्पाकूतं। राएसि! किं ण पेक्खसि, णिउणं णिरुविज्जमाणं से मुहं वच्छाए वहूए मुहचन्देण संवददिज्जेव। (१)

जन। पश्यामि सखि पश्यामि।

---

(१) जात इतोऽपि तावदेहि। अहो न केवलं दरविकसन्नीलोत्पलश्यामलोज्ज्वलेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिर्घोषघर्घरनिनाददीर्घदीर्घेण स्वरेण च रामभद्रमनुहरति, ननु कठिनकमलगर्भपक्ष्मलः शरीरस्पर्शोऽपि तादृश एव वत्सस्य। जात! पश्यामि तावत्ते मुखं। राजर्षे! किं न पश्यसि, निपुणं निरूप्यमाणमस्य मुखं वत्साया वध्वा मुखचन्द्रेण संवदत्येव। कवलितेन भक्षितेन अरविन्दकेसरेण कषायो रक्तः सुश्राव्यशब्दो वा कण्ठो यस्य तादृशोयः कलहंसस्तस्य, निर्घोषो मेघध्वनिस्तद्वद्घर्घरो यो निनादस्तद्वद्दीर्घदीर्घेणातिदीर्घेण। अनुहरति अनुकरोति। कठिनस्य परिणतस्य कठिनो वा कमलस्य गर्भोमध्यं तस्येव पक्ष्मलः अमृदुलः। ईदृश एव स्पर्शो वीराणामिति भावः। संवदति सदृशीभवति।

कौश। अम्मो उम्मत्तीभूदं विश्र मे हिश्रश्रं किम्पि एदस्स मुहं विप्पलहदि। (१)

जन। निरूप्य।

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
संपूर्णं प्रतिविम्बितेव निखिला सैवाकृतिः सा द्युतिः।
सा वाणी विनयः सएव सहजः पुण्यानुभावोऽप्यसौ,
हाहा दैव, किमुत्पथैर्मम मनः पारिप्लवं धावति॥

कौश। अत्थि दे मादा, सुमरसि वा तादं। (२)

लवः। नहि नहि।

कौश। तदो कस्स तुमं। (३)

लवः। भगवतोवाल्मीकेः।

कौश। अइ जाद कधिदव्वं कधेहि। (४)

लवः। एतावदेव जानामि।

---

(१) अम्मो उन्मत्तीभूतमिव मे हृदयं, किमप्येतस्य मुखं विप्रलभते। किमपि सीतामुखसादृश्यविशिष्टं। विप्रलभते प्रतारयति एतन्मुखेन प्रतार्यमार्णं सत् मम हृदयमुन्मत्तं भवतीत्यर्थः।

(२) अस्ति ते माता, स्मरसि वा तातम्।

(३) ततः कस्य त्वम्।

(४) अयि जात कथयितव्यं कथय।

---

* सैवाकृतिर्मूर्त्तिरस्मिन् शिशौ प्रतिविम्बिता छायारूपेण पतितेव अभिव्यज्यते लक्ष्यते। एवं द्युतिप्रभृतिष्वन्वयोबोध्यः। पुण्यानुभावः पवित्रप्रभावः। उत्पथैः कुमार्गैः सीतापुत्रोऽयमिति कुतर्कवर्त्मभिरित्यर्थः। पारिप्लवं चञ्चलं सत्।

नेपथ्ये । भोः भोः सैनिकाः, एष खलु कुमारश्चन्द्रकेतु राज्ञापयति, न केनचिदाश्रमाभ्यर्णभूमिराक्रमितव्येति ।

अरुन्धतीजनकौ । अये मेध्याश्वरक्षाप्रसङ्गादुपागतोवत्स श्चन्द्रकेतुरद्य द्रष्टव्यइत्यहो सुदिवसः ।

कौश । वच्छलक्खणस्स पुत्तको आणवेदित्ति अमिअवि-न्दुसुन्दराइं अक्खराइं सुणीअन्ति । (१)

लवः । आर्य्य ! कएष चन्द्रकेतुर्नाम ।

जन । जानासि रामलक्ष्मणौ दाशरथी ।

लवः । एतावेव रामायणकथापुरुषौ ? ।

जन । अथ किम् ।

लवः । तौ कथं न जानामि ।

जन । तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः ।

लवः । उर्म्मिलापुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः ।

अरु । विहस्य । आविष्कृतं कथाप्रावीण्यं वत्सेन ।

जन । विचिन्त्य । यदि त्वमीदृशः कथायामभिज्ञस्तद्ब्रूहि तावत् पृच्छाम, तेषां दशरथात्मजानां किं नामधेयापत्यानि केषु केषु दारेषु प्रसूतानि ।

लवः । नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्व्वः ।

---

(१) वत्स लक्ष्मणस्य पुत्रक आज्ञापयतीत्यमृतविन्दुसुन्दराण्यक्ष-राणि श्रूयन्ते ।

---

* रामायणकथायाः पुरुषौ प्रधानपुरुषौ नायकतत्सहचरा-वित्यर्थः ।

जन। किं न प्रणीतएव कविना।

लवः। प्रणीतोनतु प्रकाशितः। तस्यैव खलु कोऽप्येकदेशः सन्दर्भान्तरेण रसवानभिनेयार्थः कृतः, तच्च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद्भरतस्य मुनेस्तौर्य्यत्रिकसूत्रकारस्य। *

जन। किमर्थम्।

लवः। स किल भगवान् भरतस्तमप्सरोभिः प्रयोजयिष्यतीति।

जन। तत्सर्व्वमस्माकमिदमाकूतकरम्। †

लवः। महती पुनस्तस्मिन् भगवतो वाल्मीकेरास्था, केषाञ्चिदन्तेवासिनां हस्तेन तत्पुस्तकं भरताश्रमं प्रति प्रेषितम्। तेषामानुयात्रिक ‡ श्चापपाणिरप्रमादार्थं § मस्मद्भ्राता प्रेषितः।

कौश। जाद भादावि दे अत्थि। (१)

लवः। अस्त्यार्य्यः कुशोनाम।

---

(१) जात भ्रातापि ते अस्ति।

---

* सन्दर्भान्तरेण अन्यप्रबन्धेन। रसवान् करुणाद्यङ्गारस्यात्मकः। अभिनेयार्थः नटचेष्टया प्रकाशनीयवस्तुः। तौर्य्यत्रिकसूत्रकारस्य नाट्यसूत्रकारस्य।

† आकूतकरं कौतुक्यवर्द्धकं। किमर्थमेवं कृतमिति ज्ञानाय वयमत्युत्सुका जाता इत्यर्थः।

‡ आनुयात्रिकोऽनुचरः।

§ अप्रमादार्थं सावधानत्वाय कथञ्चित्प्रकाशप्रयेति भावः।

कौश । जेट्ठोत्ति भणिदं भोदि । (१)

लवः । एवमेतत्, प्रसवक्रमेण स किल ज्यायान् इति ।

जन । किं यमजावायुष्मन्तौ ।

लवः । अथ किम् ।

जन । कथय कथाप्रबन्धस्य कीदृशः पर्य्यन्तः ।

लवः । अलीकपौरप्रवादोद्विग्नेन राज्ञा निर्व्वासितां देवयजनसम्भवां सीतादेवीमासन्नप्रसववेदनामेकाकिनीमरण्ये परित्यज्य लक्ष्मणः प्रतिनिवृत्त इति ।

कौश । हा वच्छे मुद्धचन्दमुहि ! कीदाणिं दे कुसुमभूदस्स सरीरस्स देव्वदुव्विलासपरिणामो एकल्लिआए णिवडिदो । (२)

जन । हा वत्से !

नूनं त्वया परिभवञ्च नवञ्च घोरं *
ताञ्च व्यथां प्रसवकालकृतामवाप्य ।
क्रव्याद्गणेषु परितः परिवारयत्सु
संत्रस्तया शरणमित्यसकृत् स्मृतोऽस्मि † ॥

(१) ज्येष्ठ इति भणितं भवति । आर्य्यशब्दप्रयोगादिति शेषः ।

(२) हा वत्से मुग्धचन्द्रमुखि ! क इदानीन्ते कुसुमभूतस्य शरीरस्य दैवदुर्व्विलासपरिणाम एकाकिन्या नियतितः । कः कीदृशः । एकाकिनीस्थाने एकल्लिआ इति देशी ।

* परिभवं परित्यागरूपमवमानं, नवं कदाप्यननुभूतं, घोरं भयम् ।

† शरणमिति रक्षको भवत्विति कृत्वा असकृत् स्मृत इत्यन्वयः ।

लवः। अरुन्धतीं प्रति। आर्य्ये! कावेतौ।

अरु। इयं कौशल्या, अयं जनकः।

लवः। सबहुमानखेदकौतुकं पश्यति।

जन। अहो दुर्मर्य्यादता दुरात्मनां पौराणाम्, अहो रामस्य राज्ञः चिप्रकारिता।

एतद्वैशसघोरवज्रपतनं शश्वन्ममोत्पश्यतः
क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा॥ *

कौश। भअवदि! परित्ताहि परित्ताहि, पसादेहि कुविदं राएसिं। (१)

अरु। एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम्।
राजन्नपत्यं रामस्ते पाल्याश्च कृपणाः प्रजाः। †

(१) भगवति! परित्राहि परित्राहि, प्रसादय कुपितं राजर्षिम्।

* एतत् सीतानिर्व्वासनमत्याहितरूपं घोरं दुःसहं वज्रपतनमुत्पश्यतश्चिन्तयतो मम क्रोधस्य चापेन धनुर्धारणेन शापेन अभिशापप्रदानेन वा धगिति झटिति ज्वलितुमवसरः समयोऽयमित्यन्वयः।

† हि यतः परिभूतानामवमानितानां मनस्विनां मानिनामेतत् चापशापान्यतरकरणकं प्रायश्चित्तं परिभवशं दण्डकरणम् न्याय्यमिति शेषः, प्रकृते तु प्रजारञ्जनार्थमेव तादृशमनुष्ठितवतो रामस्य न परिभवकर्तृत्वमिति भावः। दण्डवत् प्रायश्चित्तानि भवन्तीति स्मृतेर्दण्डप्रायश्चित्तयोस्तुल्यार्थता। यद्वा परिभूतानां मनस्विनां चित्तं मनः प्राय एतत् एवं परिभवकर्तृषु क्रोधाध्मातं भवतीत्यर्थः, प्रकृते तु नैतद्युक्तमित्याह राजन्नित्यादि पुत्रां दीनाश्च

जन । शान्तमा रघुनन्दने तदुभयं तत्पुत्रभाण्डं हि मे
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरोजनः ॥ *

प्रविश्य सम्भ्रान्ता वटवः । कुमार ! अश्वोऽश्व इति पशु-समाम्नायिकः † कोऽपि भूतविशेषो जनपदेषु श्रूयते, सोऽय-मस्माभिरधुना स्वयं प्रत्यक्षीकृतः ।

लवः । अश्वोऽश्वइति तत्र पशुसमाम्नाये सांग्रामिकेच ‡ पठ्यते, तद्ब्रूत कीदृशः ।

वटवः । श्रूयताम् ।

पश्चात्पुच्छं वहति विपुलं, तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति, खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान् §
किं वा व्याख्यातै,र्व्रजति स पुनर्दूर,मेह्येहि यामः ॥

इत्युपसृत्याजिने हस्तयोश्चाकर्षन्ति ।

---

कृतापराधा अपि अनुग्राह्या एवेतिभावः । परिभूतानां परिभूतवतां, कर्म्माविवक्षया अकर्म्मकत्वात् कर्त्तरि क्तः । प्रायश्चित्तं मनस्विपरिभवजनितपापक्षयसाधनं कर्म्मेति वा ।

* वेति पक्षान्तरे तदुभयं पापशापकरणकप्रायश्चित्तं रघुनन्दने शान्तं मास्त्वित्यर्थः यतस्तत् पुत्रभाण्डं, भाण्डं मूलधनं, पुत्रः भाण्डमिवेति पुरुषव्याघ्रवत् कर्म्मधारयः । तदिति विधेयविशेषणत्वात् क्लीवत्वं । तथा पौरोजनश्च भूयिष्ठा अधिका द्विजा ब्राह्मणा बाला वृद्धा विकला आतुराः स्त्रैणानि स्त्रीवृन्दानि च यत्र तादृशः अनुकम्पनीय इति शेषः ।

† पशुसमाम्नायिकः पशुशास्त्रपठितः ।

‡ सांग्रामिके युद्धशास्त्रे ।

§ आमपात्रान् अपक्वाम्राकारान् शकृत्पिण्डकान् मलखण्डान् ।

लवः । सकौतुकोपरोधविनयम् । आर्य्याः ! पश्यत पश्यत, एभिर्नीतोऽस्मीति, त्वरितं परिक्रामति ।

अरुन्धतीजनकौ । पूरयतु कुतूहलं वत्सः ।

कौश । भअवदि ! जाणामि, एदं अणालोअन्ती ण जीआएमि विअ, अदो अण्णदो भविअ पेक्खह्म दाव गच्छमाणं दीहाउं । (१)

अरु । अतिजवेन दूरमतिक्रान्तः स चपलः कथं दृश्यते ।

प्रविश्य कञ्चुकी । भगवान् वाल्मीकिराह ज्ञातव्यमेतदवसरे भवद्भिरिति ।

जन । अतिगम्भीर * मेतत्, किमपि भविष्यति । भगवत्यरुन्धति ! सखि कौशल्ये ! आर्य्य गृष्टे ! स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्याम इति । निष्क्रान्तो वृद्धवर्गः ।

वटवः । पश्यतु हि कुमारस्तदाश्चर्य्यम् ।

लवः । दृष्टमवगतञ्च । नूनमाश्वमेधिकोऽयमश्व इति ।

वटवः । कथं ज्ञायते ।

लवः । ननु मूर्खाः ! पठितमेव युष्माभिस्तत्काण्डे,† किं न पश्यथ, प्रत्येकं शतसंख्याः ‡ कवचिनो दण्डिनो निषङ्गिणश्च

(१) भगवति ! जानामि, एतमनालोकयन्ती न जीवामीव, अतोऽन्यतोभूत्वा पश्यामस्तावद्गच्छन्तं दीर्घायुषम् ।

* अतिगम्भीरं गुरुतरम् ।

† तत्काण्डे यज्ञप्रकरणे ।

‡ शतसंख्या इति शतं न्यूनसंख्याथाद्यर्थं, वीरभूयिष्ठप्रदेशे शताधिका अप्यश्वरक्षकाः कवचिप्रभृतयो नियुज्यन्ते इति ।

रचितार, स्तत्प्रायमेवेदमपि दृश्यते, यदीह न प्रत्ययस्तदृ-त्वा पृच्छत ।

वटवः । भोभोः किंप्रयोजनोऽयमश्वः परिवृतः पर्य्यटति ।

लवः । सस्पृहमात्मगतम् । अये ! अश्वमेध इति विश्वविजयिनां चत्रियाणामूर्ज्जस्वलः सर्व्वचत्रियपरिभावी महानुत्कर्षनिकषः । *

नेपथ्ये । अयमश्वः पताकेयमथवा वीरघोषणा । †

सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥

लवः । सव्यथमिव । अहो सन्दीपनान्यचराणि । ‡

वटवः । किमुच्यते, प्राज्ञः खलु कुमारः । §

लवः । भोभोः तत्किमचत्रिया पृथ्वी ? यदेवमुद्घुष्यते ।

नेपथ्ये । अरे ! महाराजं प्रति कुतः चत्रियाः ।

लवः । धिगात्मान् ।

---

* उत्कर्षस्य निकषः परीक्षास्थानम् ।

† अथवेति नायमश्वः नेयं पताका च, किन्तु मूर्त्तिमती वीरघोषणा सर्व्वपरिभावि वीरत्वख्यापनम् ।

‡ सन्दीपनानि आत्मवीराणां क्रोधसंधुक्षणानि ।

§ किमुच्यते इति किंप्रयोजनोऽयमश्व इतिप्रश्नस्योत्तरतया अयमश्व इत्यादि यदभिधीयते तस्य तात्पर्य्यं परिकलयितुमशक्तावय मित्यर्थः । प्राज्ञ इति कुमारो लवः खलु प्राज्ञः, मन्ये एष एवास्य तात्पर्य्यमवगतवानिति भावः ।

यदि ते सन्ति सन्त्येव, केयमन्या विभीषिका।
किमुक्तैः, शरसम्बाधां पताकां वोहराम्यहम्॥ *

भोभोवटवः! परिहृत्य लोष्टैरभिघ्नन्तोनयतैनमश्वम्, एष रोहितानां मध्येवराकश्चरतु। †

प्रविश्य सक्रोधदर्पः पुरुषः। धिक् चापलं, किमुक्तवानसि, तीक्ष्णनीरसाश्चायुधीयश्रेणयः ‡ शिशोरपि न इमां वाचमनुमंसन्ते, राजपुत्रश्चन्द्रकेतुराकृष्टशरासनः, सोऽप्यपूर्व्वारण्यदर्शनकौतूहलाक्षिप्तहृदयो न परापतत्यद्यापि, तत्त्वरितमपसर्पतानेन तरुगहनेन।

वटवः। कुमार! कृतमनेनाश्वेन, तर्ज्जयन्ति विस्फुरितशस्त्राः कुमारमायुधीयश्रेणयः, दूरे चाश्रमपदमित, स्तदेहि हरिणप्लुतैः § पलायामहे।

---

* सन्तीति अतिवीराइति शेषः। अन्या अपरा अप्राप्ता-विकीत्यर्थः इयं विभीषिका भयप्रदर्शना का, अत्र न वयं विभीम इति भावः। किमुक्तैरिति अत्राथवेत्यूह्यम् अथवा उक्तैर्वचनैः किं, वचनैरसूयाप्रकाशो न वीराणां युज्यतइति भावः। तर्हि किं, करिष्यसीत्याह शरसम्बाधामिति शरैर्मदीयवाणैः सम्यग्बाधा रक्षणव्याघातो यस्यास्तादृशीं कृत्वा वोयुष्माकं पताकां हरामि, शरसम्बाधां शरवेष्टितामपीति वा।

† रोहितानां हरिणानाम्। वराकौ जघन्यः।

‡ तीक्ष्णाः क्रोधाध्माता नीरसाः केष्वपि प्रणयमननुसन्धानाश्च आयुधीयश्रेणयः आयुधेन व्यवहरन्तीत्यायुधीयास्तेषां श्रेणयः अस्माकं शस्त्रिवर्गाः।

§ हरिणप्लुतैश्चकितहरिणवत् सत्वरम्पधावनैः।

लवः । किं नाम * विस्फुरन्ति शस्त्राणि । धनुरारोपयन् ।

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र
मुद्गारि घोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ †

इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे ।

॥ इति कौशल्याजनकयोगोनाम चतुर्थोऽङ्कः ॥

---

* किं नामेति स्पर्द्धायाम् ।

† ज्या मौर्व्वी जिह्वेवेति तया वलयिते सम्बद्धे उत्कटे कोटी अग्रभागौ दंष्ट्रे इव दन्ताविव यत्र तत् । तथा घोरः शत्रुभयदो घनस्येव घर्घरो योऽसौ घोषस्तमुद्गारि उद्गावयिष्यत्, गमादित्वाद्भविष्यति णिन्, भविष्यद्गिनोर्णिनिति कर्म्मणि षष्ठ्यभावः । ग्रासप्रसक्तं अमङ्गलग्रासायोद्यतं तथा हसत् अट्टहासं कुर्व्वत् यदन्तकस्य वक्त्रं तदेव यन्त्रं तस्य या जृम्भा व्यादानं तद्विडम्बि तत्सदृशं विकटमुदरमन्तरालं यस्य तादृशमस्तु युद्धाय सज्जं भवत्वित्यर्थः ।

अथ पञ्चमोऽङ्कः ।

नेपथ्ये । भोभोः सैनिकाः! जातं जातमवलम्बनमस्माकं ।

नन्वेष त्वरितसुमन्त्रनुद्यमान-
व्यावल्गत्प्रजवनवाजिना रथेन ।
उद्घातप्रचलितकोविदारकेतुः*
श्रुत्वा नः प्रधनमुपैति चन्द्रकेतुः ।

ततः प्रविशति सुमन्त्रसारथिना रथेन अनुध्यायिः सा-द्भुतहर्षसम्भ्रमश्चन्द्रकेतुः ।

चन्द्र । आर्य्य सुमन्त्र ! पश्य ।

मुनिजनशिशुरेकः सर्व्वतः सैन्यकाये
नवइव रघुवंशस्याप्रसिद्धः प्ररोहः ।
दलितकरिकपोलग्रन्थि टङ्कारघोरं
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ †

---

* उद्घातेन निम्नोन्नतरथ्यायां रथस्य प्रतिघातेन प्रचलितः कोविदारकेतुः कोविदारो युगपत्रकवृक्षः तन्निर्म्मितः केतुरथवं-शीयस्य सः । प्रधनं युद्धं । श्रुत्वा नः प्रधनमुपैति चन्द्रकेतुरित्यत्र संप्राप्तः सपदि कुमारचन्द्रकेतुरिति क्वचित्पाठः ।

† सर्व्वतश्चतुर्द्दिक्षु सैन्यानां काये देहेषु जात्याश्रयत्वादेकव-चनं, दलितः करिणां कपोलग्रन्थिर्येन तत् तथा टङ्कारेण वेग-जनितटमितिशब्देन घोरं भयदं तथा ज्वलितश्च शरसहस्रं यस्य सः । सैन्यकाये इति समस्तघटकज्वलितेतिक्रियाया अधिकरणं । रघोर्व्वंशोऽन्वय एव वंशो वेणुस्तस्य अप्रसिद्धः अपरिचितः प्ररोहः करीरइव ।

किरति कलितकिञ्चित्कोपरज्यन्मुखश्री
रविरतगुणगुञ्जत्कोटिना कार्म्मुकेण ।
समरशिरसि चञ्चत्पञ्चचूड * श्चमूना
मुपरि शरतुषारं † कोऽप्ययं वीरपोतः ॥

आश्चर्य्यमाश्चर्य्यम् ।

सुमन्त्र ! आयुष्मन् !

अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं ‡ स्मरामि ॥

चन्द्र । इममेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्र-पते ।

अयं हि शिशुरेककः समररेणुभूरिस्फुरत्
करालकरकन्दलीकलितशस्त्रजालैर्बलैः ।
क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै
रमन्दमददुर्द्दिनद्विरदवारिदैरावृतः ॥ §

---

* चञ्चन्ती चञ्चला पञ्चा विस्तृता चूडा वल्कलरचितोष्णीषं यस्य सः । पञ्चेति पचिविस्तारे इत्यस्य रूपं । चञ्चचन्द्रचूड इति पाठस्तु न मनोरमः ।

† शरतुषारमिति शराणामापातभासजनकत्वेनाहिंस्रत्वात्तु-षारसाम्यम् ।

‡ कुशिकसुतो विश्वामित्रस्तस्य मखद्विषां यज्ञविघातकानां राक्षसानां प्रमाथे नाशे धृतायुधं रघुनन्दनं रामम् ।

§ अयमेककः शिशुर्बलैर्मदीयसैन्यसमूहैरावृत इत्यन्वयः । कि-म्भूतैः समररेणुषु समररेणुभिर्वा भूरि स्फुरन्ति तथा करालाभि र्भयदाभिः करकन्दलीभिः करपल्लवैः कलितानि गृहीतानि च

सुम । वत्स ! एभिः समस्तैरपि किमस्य,-किं पुनर्व्यस्तैः ।

चन्द्र । आर्य्य ! लक्ष्यतामनेन हि महानाश्रितजनप्रमाथोऽस्माकमारब्धः । तथाहि ।

आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवभूरिरुण्डनिकरैर्वीरो विधत्ते भुव
स्तृप्यत्कालकरालवक्त्रविघसव्याकीर्य्यमाणा इव ॥ *

सुम । स्वगतं । कथमीदृशेन सह वत्सचन्द्रकेतोर्द्वन्द्वसंप्रहारमनुजानीयाम् । विचिन्त्य । अथवा इक्ष्वाकुगृहवृद्धाः खलु वयं, प्रत्युपस्थिते च का गतिः ।

---

ग्रस्तजालानि येषां तैः । कलितेत्यत्र जटिलेति क्वचित्पाठः । तथा क्वणन्तीभिः कनककिङ्किणीभिर्झणझणायिताः स्यन्दनाः येषां तैः । तथा अमन्दानामधिकानां मदानां दानजलानां दुर्दिनं वर्षणं यतस्तादृशा द्विरदा हस्तिनो वारिदा इव ते येषां तैः ।

* वीरो लवः भुवं रणभूमीः वेल्लन्तश्चलन्तो भैरवा भयङ्करा भूरयोऽनेका ये रुण्डाः कवन्धास्तेषां निकरैः समूहैः हत्वा तृप्यन् अतिभोजनेन तृप्तिं गच्छन् यः कालो यमस्तस्य करालं भीमं यद्वक्त्रं तस्य विघसैर्भोजनावशिष्टैर्व्याकीर्य्यमाणा इव विधत्ते अत्र-न्वयः,कवन्धाः कालवक्त्रविघसा इवेत्युत्प्रेक्षा । वीरः किम्भूतः आगुञ्जन्तो गर्ज्जन्तो ये गिरिकुञ्जकुञ्जरा गिरिकुञ्जस्थहस्तिनस्तेषां घटा समूहस्तस्या विस्तीर्णः समुत्पन्नः कर्णज्वरः कर्णसन्तापो यतस्तं । आगुञ्जदित्यत्र आगर्जदित्येव क्वचित्पाठः । तथा अमन्दा अत्यधिका दुन्दुभीनां मदीयसैन्यस्थवाद्यविशेषाणां रवैराध्मातं प्रवर्द्धितं ज्याघोषमुज्जृम्भयन् उच्चैः प्रकाशयन् ।

चन्द्र । सविस्मयलज्जासम्भ्रमं । धिक् प्रतिनिवृत्तानि सर्व्वतः सैन्यानि मम ।

सुम । रथवेगमभिनीय । आयुष्मन् सएष वाग्विषयी-कृतस्ते प्रवीरः ।

चन्द्र । विस्मृतिमभिनीय । आर्य्य ! किं तन्नामधेयमाख्या-तमाक्रायकैः ? * ।

सुम । वत्स ! लव इति ।

चन्द्र । भोभो लव महाबाहो ! किमेभिस्तव सैनिकैः ।

एषोऽहमेहि मामेव, तेजस्तेजसि शाम्यतु ॥ †

सुम । कुमार ! पश्य पश्य ।

व्यपवर्त्तत एष बालवीरः पृतनानिर्मथनात् त्वयोपहूतः ।

स्तनयित्नुरवादिभावलीनामवमर्द्दादिव दृप्तसिंहशावः ॥

ततः प्रविशति त्वरितोद्धतपराक्रमो लवः ।

लवः । साधु राजपुत्त्र ! साधु, सत्य ‡ मैक्ष्वाकः खल्वसि, तदयं परागतएवास्मि ।

नेपथ्ये महान् कलकलः ।

लवः । सावेगं परावृत्य । कथमिदानीं भग्नाअपि प्रति-निवृत्य युद्धाभिसारिणः पर्य्यवष्टभ्य § निघ्नन्ति मां चमूप-तयः । धिग्जाल्मान् ।

---

* आक्रायकैर्मामाक्रातुं गतैः ।

† तेजस्त्वदीयं, तेजसि मदीये, शाम्यतु पराभवं गच्छतु, इत्था वीरोक्तिः ।

‡ सत्यमिति अतिबलवतोऽपि मे स्पर्द्धयाक्रानादिति भावः ।

§ पर्य्यवष्टभ्य निकटीभूय सामर्थ्यमुरीकृत्य वा ।

अयं शैलाघातक्षुभितवडवावक्त्रहुतभुक्
प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे।
समन्तादुत्सर्पन् घनतुमुलसेनाकलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव॥

इति परिक्रामति।

चन्द्र। भोभोः कुमार!।

अत्यद्भुतादपि गुणातिशयात् प्रियोऽसि,
तस्मात् सखा त्वमसि, यन्मम तत्तवैव।
तत्किं निजे परिजने कदनं † करोषि
नन्वेष दर्पनिकष ‡ स्तव चन्द्रकेतुः॥

लवः। सहर्षसम्भ्रमं परावृत्य। अहो महानुभावस्य प्रसन्न

---

* अयं समन्तादुत्सर्पन्नुत्तिष्ठन् घनो महान् तुमुलः सङ्कुलः सेनानां कलकलः युद्धोत्साहजनककोलाहलः, सेनेत्यत्र हेलेति पाठे हेलया निर्भयेन कृतः कलकलः सैन्यानां कोलाहल इत्यर्थः। स प्रलयपवनेनास्फालितः पयोराशेः समुद्रस्यौघः पूरइव शैलानां प्रलयवातेनोन्मूलितमूलं पततां वेलापर्व्वतानामाघातेन तत्कृत जलास्फालनेन क्षुभितोयो वडवावक्त्रहुतभुक् वाडवाग्निस्तद्वत्प्रचण्डोयो मे क्रोधस्तस्यार्च्चिर्निचयः प्रभातिशयः उद्रेकाधिक्यमित्यर्थः। तस्य कवलत्वं ग्रसनीयत्वं व्रजत्वित्यन्वयः। मदीयः क्रोधोयुष्माकं कलकलं ग्रासाग्रासयिष्यतीत्यर्थः।

† कदनं पीडाम्।

‡ दर्पनिकषः दर्पस्य परीक्षास्थानम्।



कर्कशा वीरवचनप्रयुक्तिर्विकर्त्तनकुलकुमारस्य * । तत्कि मेभि,रेनमेव तावत् सम्भावयामि ।

पुनर्नेपथ्ये कलकलः ।

लवः । सक्रोधनिर्वेदं । आः कदर्थितोऽहमेभिर्वारं वारं वीरसंवादविघ्नकारिभिः । †

तदभिमुखं परिक्रामति ।

चन्द्र । आर्य्य ! दृश्यतामेतद्द्रष्टव्यम् ।

दर्पेण कौतुकवता ‡ मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा ।
द्वेधासमुद्धतमरुत्तरलस्य § धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥

सुम । कुमार एवैनं द्रष्टुमपि ¶ जानाति, वयन्तु केवलं परवन्तो विस्मयेन ।

चन्द्र । भोभो राजानः !

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता
वत्रैकस्मिन् कवचनिचितैर्मध्यचर्म्मोत्तरीये ।

---

* प्रसन्ना महाकुलप्रसूतत्वान्मधुरा, कर्कशा वीरत्वात् कठोरा च । विकर्त्तनकुलकुमारस्य सूर्य्यवंशप्रसूतराजपुत्रस्य ।

† वारंवारं विघ्नकारिभिर्बाधैरिति क्वचित्पाठः । क्वचिच्च वारंवारमिति नास्ति ।

‡ कौतुकवता अस्मदानन्दकरेण ।

§ द्वेधा द्विविधया गत्या समुद्धतेन उत्थितेन मरुता तरलस्य चञ्चलीकृतस्य ।

¶ द्रष्टुमपीत्यनेन सम्भावयितुञ्च ।

कालज्येष्ठैरपरमवयःकाम्यकाये भवन्ति
येऽयं बद्धो युधि परिकरस्तेन वो धिग्, धिगस्मान् ॥ *

लवः। सक्षोभं। कथमनुकम्प्यते † नाम। विचिन्त्य। भवतु, कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत् सैन्यानि संस्तम्भयामि। इति ध्यानं नाटयति।

सुम। तत्किमकस्मादस्माकं बले सैन्यघोषाः प्रशाम्यन्ति?

लवः। पश्याम्येनमधुना ‡ सप्रगल्भम्।

सुम। ससम्भ्रमं। वत्स! मन्ये कुमारेणानेन जृम्भकास्त्रमामन्त्रितम्।

चन्द्र। अत्र कः सन्देहः।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति।
अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते
नियतममितवीर्य्यं जृम्भते जृम्भकास्त्रम् ॥ §

---

* संख्यातीतैरसंख्यैः। पदातौ पादचारिणि। मेध्यं पवित्रं रौरवमित्यर्थः। चर्म्मैव उत्तरीयं यस्य तस्मिन्। कालज्येष्ठैर्वयोऽधिकैः। अपरमेण नवेन वयसा काम्यो मनोज्ञः कायो यस्य तस्मिन्। परिकर उद्यमः। अस्मानित्यनन्तरं चकारो बोध्यः, वस्तुतस्तु वत्स्यत्र भो इति पाठः सम्यक्।

† अनुकम्प्यते नामेति सैन्यनिवारणेन चन्द्रकेतोः स्वानुकूल्यकारित्वमभिप्रेत्योक्तम्।

‡ एनं राजपुत्रम्। अधुनेति जृम्भकास्त्रेणाद्वेजकसैन्यानां स्तम्भितत्वादिति भावः।

§ इह सैन्यसमूहे इवेति पाठस्तु न मनोज्ञः। तामसस्तमः

आश्चर्यमाश्चर्यम् ।

पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभोजृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः ।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवाकीर्य्यते
मीलन्मेघतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ *

सम्बन्धी वैद्युतो विद्युत्सम्बन्धी च व्यतिकरः समूहः, प्रणिहित-मपि विषयग्रहणायोन्मीलितमपि सैन्यानां चक्षुर्यत्तमुक्तं आदौ-ग्रस्तं पश्चान्मुक्तञ्च कृत्वा छिनत्ति पीडयति तामसवैद्युतव्यति-करयोः क्षणिकत्वात् क्षणमुत्पद्यमानेन तामसव्यतिकरेण चक्षु-षोऽग्रस्तमुक्तत्वं क्षणाच्च वैद्युतव्यतिकरेण हिंसनमित्यर्थः, अथ चक्षुःपीडनानन्तरं । लिखितमिव चित्रार्पितमिव । जृम्भकास्त्रं हि प्रयुज्यमानं प्रथमं तमांस्याविर्भावयति ततस्तेजांसि अनन्तरञ्च विपक्षान् निद्रापरवशान् करोतीति स्वभावः ।

* कल्पं महाप्रलयमाक्षिपन्ति प्रवर्त्तयन्तीति कल्पाक्षेपास्तथा कठोराः खरस्पर्शाः अतएव भैरवा भयङ्करा मरुतो वातास्तैर्व्यस्तैर्विक्षिप्तैः मीलन्तः संघटमाना मेघा यत्र ते च मीलद्भिर्मेघैः श्यामलाश्चेत्यर्थः तथा तडिद्भिः कडाराणि पिङ्गलानि कुहराणि गह्वराणि येषां ते चेति विशेषणयोः कर्म्मधारयः । तादृशैर्विन्ध्याद्रेः कूटैः शृङ्गैरिव पातालोदरकुञ्जेषु पुञ्जितान्युपचितानि यानि तमांसि तद्वच्छ्यामैः तथा उत्तप्तं सत् स्फुरत् यदारकूटं पित्तलं तद्वत्कपिलं पिङ्गलं यत् ज्योतिस्तेन ज्वलन्ती दीप्तिः प्रकाशो येषां तैर्जृम्भकैरस्त्रैर्नभ आकाशमवाकीर्य्यते व्याप्यत इत्यन्वयः । जृम्भकाणां श्यामत्वं ज्वलनत्वञ्च क्षणभेदान्न विरुद्धम् । अवाकीर्य्यत इत्यत्र परिस्तीर्य्यत इति क्वचित्पाठः । मीलन्मेघेत्यत्र नीलाम्भोदेति पाठे तु कडारशब्दस्य प्रबलार्थत्वं बोध्यम् ।

सुम । कुतः पुनरस्य जृम्भकाणामागमः स्यात् ? ।

चन्द्र । भगवतः प्राचेतसादिति मन्यामहे ।

सुम । नास्य व्यवहारोऽस्त्रेषु, विशेषतो जृम्भकेषु । यतः

कृशाश्वतनया ह्येते कृशाश्वात् कौशिकं गताः ।

अथ तत्संप्रदायेन * रामभद्रे स्थिता इति ॥

चन्द्र । अपरेऽपि परमोपचीयमानसत्त्वप्रकाशाः स्वयं हि मन्त्रदृशः पश्यन्ति । †

सुम । वत्स ! सावधानोभव, परागतः प्रवीरः ।

कुमारावन्योऽन्यं प्रति । अहो प्रियदर्शनः कुमारः ।

सस्नेहानुरागं निर्व्वर्ण्य ।

यदृच्छासंवादः किमु, किमु गुणानामतिशयः

पुराणोवा जन्मान्तरनिविड़बन्धः परिचयः ।

निजोवा सम्बन्धः किमु विधिवशात् कोऽप्यविदितो

ममैतस्मिन् दृष्टे हृदयमवधानं रचयति ॥ ‡

---

* संप्रदायेन शिष्यपारम्पर्य्येण ।

† परमोपचीयमानसत्त्वप्रकाशाः प्रवृद्धसत्त्वगुणयुताः पश्यन्ति सत्त्वोद्रेकेण द्रष्टुं प्रभवन्ति ।

‡ यदृच्छासंवादः आकस्मिकसंगतिः किमु दृष्टे एतस्मिन् वीरे मम हृदयम् अवधानमेकाग्रतां रचयति प्रापयति स्नेहप्रवणं करोतीत्यर्थः । एवमग्रेऽपि । हृदयमिति प्रयोज्यं कर्म्म । रचयतीति णिजन्तासिद्धि रूपं । यदृच्छेति हठादुत्पन्नः स्वजन सम्बन्धो हि मानसमावर्ज्जयति । गुणानां शौर्य्यसौजन्यादीनाम् । पुराणः प्राचीनः, जन्मान्तरे निविडो दृढोबन्धः सम्बन्धो यत्र तादृशः परिचयो वा । विधिवशाद्दैवविपाकादविदितः । कोऽपि भ्रातृत्वादिर्निजः स्वीयः सम्बन्धोवा ।

सुम। भूयसा जीविधर्म्म एषः, यद्रसमयी कस्यचित् क-चित् प्रीतिः * यत्र लौकिकानामुपचारस्ताराम्मैत्रकं वा चक्षूराग इति, तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति। †

अहेतुः पक्षपातोयस्तस्य नास्ति प्रतिक्रिया।

सहि स्नेहात्मकस्तन्तुरन्तर्मर्म्माणि सीव्यति॥ ‡

कुमारावन्योऽन्यं प्रति।

---

* भूयसा प्रायेण, जीविधर्म्मः लोकस्वभावः। रसमयी आ-नन्दसान्द्रा।

† प्रीतिपदार्थः कीदृश इत्याह यत्रेति यत्र यस्मिन् सति लौ-किकानां लोकवृन्दानामुपचारः सेवा निरभिसन्धिशुश्रूषाप्रवृ-त्तिरित्यर्थः। उपचारस्तु सेवायामिति हेमचन्द्रः। तथा चक्षूराग इति चक्षूरागरूपं ताराम्मैत्रकंवा भवति। ताराम्मैत्रकमिति मित्रस्य भावो मैत्रकं तारयोः कनीनिकयोर्म्मैत्रकं मित्रत्वं। तारकाक्ष्णः कनीनिकेत्यमरः। तत् अप्रतिसंख्येयं निर्व्वक्तुमशक्यम् अनिबन्धनं निर्हेतुकं प्रेमाणमामनन्ति पण्डिताः कथयन्ति।

‡ अनिबन्धनमित्यनेन उपकारादिकारणजन्यः सहेतुकोऽपि प्रेमास्ति तस्य कारणापगमे विनश्वरत्वादपकृष्टत्वं सूचयन् निर्हेतु कं तं प्रशंसति अहेतुरिति पक्षपात आसक्तिः प्रणय इत्यर्थः तस्य प्रतिक्रिया कथमपि निवारणं नास्ति स चिरमेवतिष्ठतीत्यर्थः। ननु कथञ्चिन्मानसविरागादिना तस्यागमसम्भवात् कथं प्रतिक्रिया नास्तीत्युक्तमित्याशङ्क्याह सहीति स्नेहात्मकः स्नेहरूपः सहि सच प्रेमा तन्तुः रज्जुरूपः सन् अन्तर्मर्म्माणि अन्तःकरणरूपजीवस्था-नानि सीव्यति सम्बध्नाति एकतां नयतीत्यर्थः अन्तःकरणाना मैक्यान्निर्हेतुप्रेमा कदापि न विघटतीत्यर्थः।

एतस्मिन् मसृणितराजपट्टकान्ते *
मोक्तव्याः कथमिव सायकाः शरीरे।
यत्प्राप्तौ मम परिरम्भणाभिलाषा
दुन्मीलत्पुलककदम्ब † मङ्गमास्ते॥

किन्त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना
शस्त्रेणापिहि तेन किं,न विषयो जायेत यस्येदृशः।
किं वक्ष्यत्ययमेवमद्य विमुखं मामुद्यतेऽप्यायुधे
वीराणां समयोहि दारुणरसः स्नेहक्रमं बाधते॥ ‡

सुम। स्वं निर्व्वर्ण्य सास्रमात्मगतम्। हृदय! किमन्यथा परिकल्पयसे। §

मनोरथस्य यद्बीजं ¶ तद्दैवेनादितोहृतम्।
लतायां पूर्व्वलूनायां प्रसूनस्यागमः कुतः॥ **

---

* मसृणितः श्लक्ष्णसंस्कृतोराजपट्टोमणिविशेषस्तद्वत्कान्ते सुन्दरे। राजपट्टोविराटज इति त्रिकाण्डशेषः।

† उन्मीलत् पुलकानां रोमाञ्चानां कदम्बं समूहोयत्र तत्। यद्वा उन्मीलद्भिः पुलकैः कदम्बं कदम्बकुसुममिव।

‡ आक्रान्तं प्राप्तं प्रकाशितमित्यर्थः कठोरं दुःसहं तेजोयेन ईदृशेऽस्मिन् वीरे गतिः प्रतीकारोपायः। विषयोऽधीनः। स्नेहपरवशस्त्वेत् युद्धान्निवर्त्तस्वेत्यत्राह किं वक्ष्यतीति आयुधे शस्त्रप्रयोगे उद्यते उपक्रान्तेऽपि। एवं स्नेहजडतया विमुखं रणान्निवृत्तम्। समय आचारः।

§ किमन्यथा परिकल्पसे रामस्य पुत्रोऽयमिति तर्कयसि।

¶ मनोरथस्य चिराभिलाषविषयस्य रामतनयस्य यद्बीजं सीताख्यकारणम्।

** प्रसूनस्यागम इत्यत्र फलस्यागमनमिति पाठः सम्यक्।

चन्द्र। अवतराम्यहमार्य्य सुमन्त्र! स्यन्दनात्।

सुम। तत्कस्य हेतोः।

चन्द्र। यतस्तावदयं वीरपुरुषः पूजितो * भवति, अपिच खल्वार्य्य! चात्रधर्मः परिपालितोभवति, न रथिनः पादचार † मायोधयन्तीति शास्त्रविदः परिभाषन्ते।

सुम। स्वगतं। कष्टं ‡ व्रतानुप्रपन्नोऽस्मि।

कथं न्याय्यमनुष्ठानं मादृशः प्रतिषेधतु।
कथम्वाप्यनुजानातु साहसैकरसां क्रियाम्॥ §

चन्द्र। यदा तातमिश्रा अपि पितुः प्रियसखं धर्मार्थसंशयेष्वार्य्यमेव पृच्छन्ति, तत्किमार्य्योविमृशति।

सुम। आयुष्मन्नेवं यथाधर्ममभिमन्यसे।

एष सांग्रामिकोन्याय ¶ एष धर्मः सनातनः।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः॥

चन्द्र। प्रतिरूपं वचनमार्य्यस्य।

---

* पूजित इति वाहनस्याप्रतिपच्चेण सह युद्धस्य पादचारिणस्तिरस्कारजनकत्वादिति भावः।

† कोऽयं चात्रधर्म इत्याह न रथिन इति। पादचारं पादाभ्यां चारोगमनं यस्य तम्।

‡ कष्टं संशयम्।

§ कष्टमेव दर्शयति कथमित्यादि। साहसमविविच्य प्रवृत्तिस्तदेकस्मात् रसोऽनुरागो यत्र तादृशीं क्रियां पादचारितया युद्धकरणम्।

¶ सांग्रामिकः संग्रामविषयेन्यायः शिष्टव्यवहारः।

इतिहासं पुराणञ्च धर्म्मप्रवचनानिच ।*

भवन्तएव जानन्ति रघूणाञ्च कुलस्थितिम् ॥

सुम। सस्नेहास्रं परिष्वज्य।

जातस्य ते पितुरपीन्द्रजितोनिहन्तु

र्वत्सस्य वत्स! कति नाम † दिनान्यमूनि।

तस्याप्यपत्यमनुगच्छति वीरवृत्तं

दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ‡ ॥

चन्द्र। सकष्टम्।

अप्रतिष्ठे रघुज्येष्ठे § का प्रतिष्ठा कुलस्य नः।

इति दुःखेन तप्यन्ते त्रयोनः पितरोऽपरे ¶ ॥

सुम। अहह! हृदयमर्म्मदारुणा ** न्येतानि चन्द्रकेतोर्व्वचनानि।

लवः। हन्त! मिश्रीकृतोरसक्रमोवर्त्तते!

यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी

तथैवास्मिन् दृष्टिर्मम, कलहकामः पुनरयम्।

---

* इतिहासं पुरावृत्तप्रधानप्रबन्धम्। पुराणं सृष्टिवंशादि प्रधानप्रबन्धम्। धर्म्मप्रवचनानि मन्वादिप्रणीतधर्म्मप्रधाननिबन्धान्।

† कति नामेति अल्पान्येवेत्यर्थः।

‡ प्रतिष्ठां वंशसन्तानजनितां ख्यातिम्।

§ रघुज्येष्ठे रामे अप्रतिष्ठे प्रतिष्ठासम्पादकपुत्ररहिते सति।

¶ अपरे त्रयः पितरो भरतादयः।

** हृदयमर्म्मदारुणानि हृदयरूपमर्म्मस्थानपीडकानि, दारुणान्यत्र भिदुराणीति क्वचित्पाठः।

झणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु
र्धृतप्रेमा बाहुर्विकचविकरालोल्बणरसः * ॥

चन्द्र। अवतरणं रूपयन्। आर्य्य सारथिश्चन्द्रकेतुरभिवादयते।

सुम। अजितं पुण्यमोजस्वि ककुत्स्थस्येव ते महः।
श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् † ॥

अपिच। देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽपि नन्दतु, गुरुर्यस्ते गुरूणामपि।
ऐन्द्रं वैष्णवमाग्निमारुतमथो सौपर्णमोजोऽस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ‡ ॥

---

* समुपोढे उदिते। तथैवानन्दं प्रजति वात्सल्यवती भवतीत्यर्थः। झणत्काररूपं क्रूरं क्वणितं यस्य तादृशो यो गुणो मौर्व्वी तेन गुञ्जत् सशब्दं यद्गुरु तत्र धृतं स्थापितं प्रेम येन तादृशो बाहुर्विकचः सुव्यक्तो विकराल उद्भट उल्वणरसो वीररसो यस्य तादृशो भवति।

† अजितं परैरपराभूतं। पुण्यं पवित्रं सज्जनापीडकमित्यर्थः ओजस्वि अत्यूर्जितं। महस्तेजः मस्त्विति शेषः। शाश्वतो नित्यो-वराहोदेवः श्रेयसे मङ्गलाय परिकल्पतां सम्पद्यतां श्रेयोविदधा-त्वित्यर्थः। वराहदेवस्य प्रथमदैत्यहिरण्याक्षजेतृत्वेनादिवीरत्वात् तत एव श्रेयःप्रार्थनं युज्यते, सूर्य्यवंश्यानां वराहदेवोपासकत्वा-दित्यन्ये।

‡ धिनोतु प्रीणयतु। पितेत्यत्र पतिरिति क्वचित्पाठः। मैत्रावरुणोवशिष्ठः मित्रावरुणयोर्वीर्य्यात् पुनरुत्पन्नत्वात्। नन्दतु आनन्दितं करोतु। गुरूणामपि पित्रादीनामपि गुरुराचार्य्यः। अभिमन्त्रिता-

लवः । कुमार ! अतिदि नाम शोभते रथस्थ एव, कृतं कृतमत्यादरेण ।

चन्द्र । तर्हि महाभागोऽप्यन्यं रथमलङ्करोतु ।

लवः । आर्य्य ! प्रत्यारोपय रथोपरि राजपुत्त्रम् ।

सुम । त्वमप्यनुरुध्यस्व चन्द्रकेतोर्वचनम् ।

लवः । को विचारः स्वेषूपकरणेषु । किन्त्वरण्यसदो वयमनभ्यस्तरथचर्य्याः ।

सुम । जानासि वत्स दर्पसौजन्ययोर्यथोचितमीरयितुम्, यदि पुनरीदृशं त्वामैक्ष्वाको रामभद्रः पश्येत्तदास्य स्नेहेन हृदयमभिष्यन्देत ।

लवः । मान्य ! * सुजनः स राजर्षिः श्रूयते ।

सलज्जमिव । †

वयमपि न खल्वेवंप्रायाः क्रतुष्वपि मत्सराः

क इह च गुणैस्तं राजानं न वा बहु मन्यते ।

तदपि खलु मे सव्याहारस्तुरङ्गमरक्षिणां

विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाऽकरोत् ‡ ॥

रिदमाभिमाहतं । देवताद्वन्द्वे सूक्तहविषोरित्युभयपदवृद्धिः । सौपर्णं गरुडसम्बन्धि । रामलक्ष्मणधनुषोर्ज्याघोष एव मन्त्रः पुष्टिकरी ऋक् स एव जयं देयाद्दातु ।

* मान्येत्यत्र मन्ये इति पाठो न रुचिरः ।

† सलज्जमिवेति सुजनस्य राजर्षेस्तुरङ्गधारणेन यज्ञविघातानौचित्यादिति भावः ।

‡ ननु राज्ञः सुजनत्वज्ञानेऽपि भवान् कथं तदीयक्रतुतुरङ्गग्रहणेनौद्धत्यमाविष्कारेत्यत आह वयमपीति एवंप्राया उद्धत

चन्द्र। सस्मितं। किन्नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः।

लवः। अस्त्वमर्षो माभूद्वा, एतत्तु पृच्छामि, दान्तं * हि राघवं राजानं शृणुमः, सकिल नात्मना दृप्यति † नाप्यस्य प्रजा दृदृक्षो ‡ जायन्ते, तत् किमस्य मनुष्या राक्षसीं § वाचं वदन्ति।

ऋषयोराक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।
सा योनिः सर्व्ववैराणां सा हि लोकस्य निर्ऋतिः॥ ¶

इति हस्म तां निन्दन्ति, अथेतरा ** मभिष्टुवन्ति।

---

वृत्तयोन तथा भ्रातुष्वपि मत्सराः यथेषु देषिणाश्च न। भवाशोवा वय मन्यान् प्रति तादृशाः रामराजं प्रति तु नैवेत्याह कहश्चेति। तुर ङ्गमरक्षिणां सव्याहारः अयमश्वः पताकेयमित्यादि वचनमखिलक्ष त्त्रायामाक्षेपेण निन्दया या प्रगल्भता कर्कशता तथा मे विकृतिं कोपमकरोत्। व्याहार इत्यत्र व्यापार इति पाठस्तु न मनोरमः।

* दान्तं सहिष्णुं।

† आत्मना स्वयं न दृप्यति न गर्व्वं प्रकाशयति।

‡ दृदृक्षोद्धताः।

§ मनुष्याः सैनिकाः राक्षसीं राक्षसानामिव परुषां परपीडाकरीमित्यर्थः।

¶ उन्मत्तादृप्ताश्च राक्षसीं वाचं वदन्तु नत्वितरे इति ऋषये मन्वादयोवदन्ति, यदाहुः सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् स त्यमप्रियम्। प्रियञ्च नानृतं ब्रूयादेषधर्म्मः सनातनइत्यादि। सा राक्षसी वाक् सर्व्ववैराणां योनिः कारणम्। साहि सा च लोकस्य निर्ऋतिरलक्ष्मीः।

** इतरां सन्तताम्।

कामान् दुग्धे, विप्रकर्षत्य * लक्ष्मीं
कीर्त्तिं सूते दुष्कृतं या हिनस्ति ।
तां चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः † ॥

सुम । परिपूतस्वभावोऽयं कुमारः प्राचेतसान्तेवासी वदत्यभिसम्पन्नमार्षेण संस्कारेण । ‡

लवः । यत् पुनश्चन्द्रकेतो वदसि, किन्तु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष इति, तत् पृच्छामि, किं व्यवस्थितविषयाः ¶¶ चत्रधर्मा इति ।

सुम । नैव खलु जानासि तं देवमैक्ष्वाकं, यदेवं वदसि, तद्विरम्यतामतिप्रसङ्गात् § ।

सैनिकानां प्रमाथेन सत्यमोजायितं त्वया ।
जामदग्न्यस्य दमने नैवं निर्ब्बन्धुमर्हसि ॥ ¶

---

* विप्रकर्षति निवारयति । मातरं जनिकां । धेनुं कामगवीमिव । सूनृतां प्रियसत्यार्थाम् ।

† आर्षेण संस्कारेण ऋषीणामिव व्युत्पत्त्या अभिसम्पन्नं सम्बद्धं यथा तथा ।

‡ व्यवस्थितोव्यवस्थया नियमितः तद्व्यक्तित्वेनावधारित इत्यर्थः विषयआश्रयो येषां ते । किं रामएव चत्रधर्म्माः शौर्य्यादय स्तिष्ठन्ति नान्यत्रेत्यर्थः ।

§ अतिप्रसङ्गादत्याकृष्टेः ।

¶ ओजायितमिति श्लीबादेरभूततद्भावे इत्यनेनायः ओजोऽप्सरसोवाचि सश्चेति सलोपः ततोभावे क्तः ओजस्विनापि त्वया कथञ्चित्सम्पन्नेन सैनिकानां प्रमाथेन हेतुनां ओजस्विना जात

लवः। सहासम्। आर्य्य जामदग्न्यस्यापि दमनः सराजा, इति कोऽयमुच्चैर्वादः। *

सिद्धं ह्येतद्वाचि वीर्य्यं द्विजानां
बाह्वोर्वीर्य्यं यत्तु तत्क्षत्रियाणाम्।
शस्त्रग्राही ब्राह्मणोजामदग्न्य
स्तस्मिन् दान्ते का स्तुतिस्तस्य राज्ञः॥

चन्द्र। सोन्माथमिव। आर्य्य आर्य्य! कृतमुत्तरोत्तरेण।

कोऽप्येष संप्रति नवः पुरुषावतारो
वीरोन यस्य † भगवान् भृगुनन्दनोऽपि।
पर्य्याप्तसप्तभुवनाभयदक्षिणानि ‡
पुण्यानि तातचरितानि च यो न वेद॥

लवः। कोहि रघुपतेश्चरितं महिमानञ्च न जानाति, यदि नाम § किञ्चिद्वक्तव्यमस्ति, अथवा शान्तं।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु, हुं वर्त्तते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तोहि ते।

---

मिति। न ते स्वाभाविकमोजस्वित्वमतोवीरश्रेष्ठं रामं प्रति कटाक्षनिक्षेपोऽनुचित इत्ययमर्थोऽभूतद्भावविहितेनाय प्रत्ययेन ख्यापि।

* उच्चैर्वादः श्लाघावाक्यम्।

† यस्य न वीरो वीरत्वेन न गण्यः।

‡ पर्य्याप्ता सम्पन्ना सप्तभुवनानामभयरूपा दक्षिणा यज्ञनिवृत्तिसम्पादकं देयवस्तु यत्र तानि, यद्वा पर्य्याप्तं प्रभूतं यत्सप्तभुवनानामभयं तत्र दक्षिणानि अनुकूलानि निपुणानि वा।

§ यदि नामेति किञ्चिदर्थः।

यानि त्रीण्यकुतोभयान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥ *

चन्द्र । आः तातापवादभिन्नमर्याद अतिहि नाम प्रगल्भसे ।

लवः । अये मय्येव भ्रुकुटीधरः संवृत्तः ।

सुमं । स्फुरितमनयोः कोपेन । तथाहि ।

---

* ऊं वर्त्तत इति सोल्लुण्ठनवादिनां भङ्गी । अत्र किं वर्ण्यत इति क्वचित्पाठः । सुन्दस्य सुन्दासुरस्य स्त्री ताडका तस्यादमनेऽपि स्त्रीवधेऽपीत्यर्थः । खरायोधने खरराक्षसयुद्धे यानि त्रीणि चापच्छेदनकवचपातनसर्व्वाङ्गवेधनरूपसम्बन्धापारणयोपरवर्त्तीनि, अकुतोभयानि निर्भयानि, सोल्लुण्ठोक्तिरियं भयातिशयवन्तीत्यर्थः, पदानि व्यवसायाः, पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुष्विति अमरः । चापच्छेदाद्यनन्तरं व्याकुलतया तास्ता चेष्टा इत्यर्थः । खरकृताच्चापच्छेदादिरूपात्त्रयो व्यापारा वा, एत त्सल्ये अकुतोभयानीति न सोल्लुण्ठन । चापच्छेदादि यथा वाल्मीकिये । ततोऽस्य सशरं चापं मुष्टिदेशे महात्मनः । खरश्चिच्छेद रामस्य दर्शयन् हस्तलाघवमिति । सन्नाहं तत्र बाणैः खरमुक्तैः सुपर्व्वभिः । पपात कवचं भूमौ रामस्यादित्यवर्च्चसमिति । स रामो बहुभिर्बाणैः खरमुक्तैर्निःशितैः । विद्धो रुधिरसिक्ताङ्गो बभूव रुषितो भृशमिति च । इन्द्रसूनुर्व्वाली तस्य दमने यद्वा यत्र कौशलं दर्शितवन्तः तस्मिन् प्रच्छन्नतया बाणपातनमित्यर्थः । नहि महावीरस्य व्यापादनमन्येन क्रियते न वा स प्रच्छन्नो भूत्वा पापवत्कृत्यमनवधानेन मारयति इत्येतत्सर्वं सार्व्वलौकिकं नोद्घाटनीयमित्यर्थः ।

चूडामण्डलबन्धनं तरलयत्याकूतजो वेपथुः*
किञ्चित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः†
धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रं भ्रुवो-
श्चन्द्रस्योत्कटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥

कुमारौ । तदितो विमर्दक्षमां भूमिमवतरावः ॥

॥ इति निष्क्रान्ताः सर्वे ॥

इति कुमारविक्रमो नाम पञ्चमोऽङ्कः ।

---

* आकूतोऽभिप्रायो वा कोप इत्यर्थः तस्माज्जातो वेपथुः कम्पः चूडामण्डलस्य बन्धनं कृदभिहितभावत्वाद्बध्यमानं चूडामण्डलमित्यर्थः तरलयति चञ्चलयति । अत्र कोपेनोद्धतधूतकुन्तल भवः सङ्काकुजो वेपथुरिति कश्चित्पाठः ।

† स्वयं रज्यमाने नेत्रे कोकनदच्छदस्य सदृशे जाते इत्युद्देश्यविधेययोर्वैपरीत्येनान्वयो बोध्यः ।



विजृम्भितञ्च दिव्यस्य मङ्गलाय द्वयोरपि ।
स्तनयित्नोरिवामन्द्रं दुन्दुभेर्दुन्दुमायितम् ॥ *

तत्प्रवर्त्यतामनयोः प्रवीरयोरनवरतमविरललुलितविकचकनकमयकमलकमनीयसंहतिरमरतरुतरुणमुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः † ।

विद्याधरी । ता किंत्ति उण अआण्डताण्डविदुद्दण्डतरलिदतडिच्छडाकडारमम्बरं झत्ति संवुत्तं । (१)

विद्याधरः । तत्किन्नु खल्विद ।

त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्त्तण्डज्योतिरुज्ज्वलः ।
पुटभेदो ललाटस्थनीललोहितचक्षुषः ॥ ‡

---

(१) तत्किमिति पुनरकाण्डताण्डवितोद्दण्डतरलिततडिच्छटाकडारमम्बरं झटिति संवृत्तम् । अकाण्डमकस्मात् ताण्डविता नृत्यन्तीव तथा उद्दण्डतरलिता उद्भटचाञ्चल्या या तडिच्छटा विद्युल्लेखा तयेव कडारं कपिलम् ।

---

* स्तनयित्नोर्मेघस्येव दिव्यस्य स्वर्गीयस्य दुन्दुभेरामन्द्रं गम्भीरं दुन्दुमायितं दुन्दुमेति ध्वनितं विजृम्भितं देवैः प्रवर्त्तितं, शिष्टं स्पष्टम् । दिव्यस्येत्यत्र दिष्ट्यास्विमिति क्वचित् विविचायेति पाठद्वयमशुद्धेयम् ।

† अविरलेत्यादि कनककमलसुरतरुमुकुलसहितपुष्पवर्षणं कर्त्तव्यमित्यर्थः ।

‡ त्वाष्ट्रं विश्वकर्मसम्बन्धि यन्त्रं कुन्दाख्यं तस्य या भ्रमिस्तया भ्रान्तस्य कुन्दयन्त्रोल्लिखितस्येत्यर्थः मार्त्तण्डस्य सूर्य्यस्येव ज्योतिषा उज्ज्वल उद्दीप्तः, पुटभेदो जगद्दाहायोन्मीलनम् ।

विचिन्त्य। आं ज्ञातं, कश्चिन चन्द्रकेतुना प्रयुक्तमस्त्रमाग्नेयं, यस्यायमग्निच्छटासम्पातः। संप्रति हि,

अवदग्धकर्ब्बुरितकेतुचामरै
रपयातमेव हि विमानमण्डलैः।
दधति ध्वजाङ्कुशपटाञ्चलेष्विमाः
चणकुङ्कुमच्छुरणविभ्रमं शिखाः॥ *

आश्चर्य्यं, प्रवृत्तएवायमुच्चण्डवज्रखण्डावस्फोटपटुरुत् सर्पिस्फुलिङ्गगुरुत्तालतुमुललेलिहानज्वालासम्भारभैरवोभगवानुषर्ब्बुधः †।

प्रचण्डस्त्वाः सर्व्वतः सन्तापस्तत्प्रियामङ्केनाच्छाद्य दूरमपसरामि। तथा करोति।

---

* अवदग्धानि ईषद्दग्धानि अतएव कर्ब्बुरितानि चित्रितानि केतवश्चामराणि च ध्वजदण्डचामराणि वा येषां तैः। कर्ब्बुरितेत्यत्र जर्ज्जरितेति क्वचित्पाठः। अपयातमेव दाहभीत्या पलायितमेव, भावे क्तः। तथापि इमाः शिखा वह्निज्वालाः ध्वजाङ्कुशपटाञ्चलेषु ध्वजदण्डस्था अङ्कुशाकारा ये पटास्तेषामेकदेशेषु क्षणं व्याप्य कुङ्कुमच्छुरणविभ्रमं कुङ्कुमविलेपनस्य भ्रान्तिं विलासं वा दधति।

† उच्चण्डानामतिकठोराणामपि वज्रखण्डानामवस्फोटे पटुः समर्थः, उत्सर्पिभिः समन्तात्प्रसरद्भिः स्फुलिङ्गैर्गुरुर्बहुलीकृतः। उत्तालानामुत्कटानां तुमुलानां सङ्कुलानां लेलिहानानाञ्च पुनः पुनरास्वादतत्पराणां ज्वालानां शिखानां सम्भारेण विस्तारेण भैरवोभयङ्करः, उषर्ब्बुधोऽग्निः।

विद्याधरी । दिट्ठिआ एदेण विमलमोत्तिअफलसीदल सिणिद्धमसिणसोवाणमंसलेण, णाहदेहप्फंसेण आणन्दमन्द मुउलिदघुम्मन्तलोअणाए अन्तरिदोज्जेव सन्दावो । (१)

विद्याधरः । अयि किमत्र मया कृतम्, अथवा ।

अकिञ्चिदपि * कुर्व्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं योहि यस्य प्रियोजनः ॥

विद्याधरी । कधमविरलविलोलघुम्मन्तविज्जुल्लदाविलासमण्डिदेहिं मत्तमोरकण्ठसामलेहिं ओच्छरीअदि णहत्थलं जलहरेहिं । (२)

विद्याधरः । हन्त हन्त कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खल्वयम् । कथमविरलप्रयुक्तवारिधारासम्पातैः प्रशान्तं पावकास्त्रम् ।

विद्याधरी । पिअं मे पिअं मे । (३)

विद्याधरः । हन्त हन्त भो भोः सर्व्वमतिमात्रं दोषाय

---

(१) दिष्ट्या एतेन विमलमौक्तिकफलशीतलस्निग्धमसृणसोपानमांसलेन नाथदेहस्पर्शेन आनन्दमन्दमुकुलितघूर्णल्लोचनाया अन्तरित एव सन्तापः । विमलमौक्तिकफलवच्छीतलः स्निग्धः स्नेहव्यञ्जकः मसृणोऽतीक्ष्णः सोपानवन्मांसलः ऊर्द्धार्द्धक्रमेण दीर्घतरः सर्व्वाङ्गीन इत्यर्थः, तेन ।

(२) कथमविरलविलोलघूर्णद्विद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठश्यामलैराच्छाद्यते नभस्तलं जलधरैः ।

(३) प्रियं मे प्रियं मे ।

---

* अकिञ्चिदपीत्यादिश्लोकस्य विवृतिः पूर्व्वमुक्ता ।

यत् प्रवलवातावलिक्षोभगम्भीरगुणगुणायमानमेघमेदुरान्धकारनीरन्ध्रनिबद्धमेकवारविश्वग्रसनविकटविकरालकालकण्ठमुखकन्दरविवर्त्तमानमिव युगान्तयोगनिद्रानिरुद्धसर्व्वद्वारनारायणोदरनिविष्टमिव भूतजातं प्रवेपते * ।

साधु वत्स चन्द्रकेतो साधु, स्थाने वायव्यास्त्रमीरितम् । यतः

विद्याकल्पेन † मरुता मेघानां भूयसामपि ।
ब्रह्मणीव विवर्त्तानां ‡ क्वापि विप्रलयः कृतः ।

विद्याधरी । णाध को दाणिं एसो ससम्भमुक्खित्तकरब्भमिदजोत्तच्चलो दूरदोज्जेव मङ्गरवअणपडिसिद्धजुज्झवा-

---

* प्रवलवातावलिक्षतोयः क्षोभस्तेन गम्भीरं यथातथा गुणगुणायमाना गर्ज्जन्तो ये मेघास्तैर्मेदुरो निविडो योऽन्धकारस्तेन नीरन्ध्रनिबद्धमत्याक्रान्तं सत् । एकवारेण एकोपक्रमेणैव यद्विश्वस्य ग्रसनं तदर्थं विकटविकरालोऽतिविस्फारितोयः कालकण्ठस्य रुद्रस्य मुखकन्दरोमुखगर्त्तस्तत्र विवर्त्तमानमिव । तथा युगान्ते प्रलये योगोवृत्तिरोधः सएव वाह्यविषयानुभवप्रतिबन्धकत्वान्निद्रा तया निरुद्धानि निर्व्यापारीकृतानि सर्व्वाणि द्वाराणीन्द्रियाणि यस्य तादृशस्य नारायणस्योदरे निविष्टमिव ।

† विद्याकल्पेन विद्या तत्त्वज्ञानं जीवब्रह्मणोरभेदज्ञानमित्यर्थः अविद्याकार्य्यत्वेन ब्रह्मभिन्नवस्तुनो मिथ्यात्वज्ञानम्वा तत्सदृशेन ।

‡ विवर्त्तानां प्रपञ्चानां । तेषां ब्रह्मसत्ताविषमसत्ताकत्वात् । उपादानविषमसत्ताककार्य्योत्पादो विवर्त्त इति वेदान्तिन ।

वारो एदाणं कुमाराणं अन्तरम्मि विमाणवरं ओदारेदि । (१)

विद्याधरः । एष शम्बूकवधात् प्रतिनिवृत्तो रघुपतिः ।

शब्दं महापुरुषसंविहितं निशम्य *

तद्गौरवात् समुपसंहृतसंप्रहारः ।

शान्तो लवः, प्रणत एव च चन्द्रकेतुः,

कल्याणमस्तु सुतसङ्गमनेन रामः ॥

इति निष्क्रान्तौ, विष्कम्भकः ।

ततः प्रविशन्ति रामो लवः प्रणतश्चन्द्रकेतुश्च ।

रामः पुष्पकादवतरन् ।

दिनकरकुलचन्द्र चन्द्रकेतो

सरभसमेहि दृढं परिष्वजस्व ।

तुहिनशकलशीतलैस्तवाङ्गैः

शममुपयातु ममापि चित्तदाहः †

चन्द्र । अभिवादये ।

रामः । उत्थाप्य सस्नेहास्रं परिष्वज्य । अपिनाम कुशलं तव दिव्यास्त्रधरदेहस्य ।

---

(१) नाथ कः इदानीमेष ससम्भ्रमोत्क्षिप्तकरभ्रमितयोरञ्चलोद्दूरत एव मधुरवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोरन्तरे विमानवरमवतारयति । योक्त्रं युगेशादण्डयोः संयोजन रज्जुविशेषः विमानेऽपि तत् सम्भवात् । अन्योऽपि कश्चित्तयष्ट्यादि भ्रमणेन दूरस्थानप्रियकर्मकरयान्निवारयतीति स्वभावः ।

---

* महापुरुषसंविर्त महापुरुषेण रामेणोच्चरितम् ।

† चित्तदाहः सीताविरहजनितमनस्तापः ।

चन्द्र । कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्याभ्युदयेन, तद्विज्ञापयामि, मामिवाविशेषेण मत्तः * शिवतरेण चक्षुषा पश्यतमुं महावीरप्रकाण्डं † तातः ।

रामः । लवं निरूप्य । दिष्ट्या अतिकल्याणाकृतिरयं वयस्योवत्सस्य ।

चातुर्लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्त्रोधर्म्मः श्रितइव तनुं ब्रह्मकोषस्य गुप्त्यै ।
सामर्थ्यानामिव समुदयः सञ्चयोवा गुणाना
माविर्भूय स्थितइव जगत्पुण्यनिर्म्माणराशिः ‡ ॥

लवः । अहो पुण्यानुभावदर्शनोऽयं महापुरुषः ।

आश्वासस्नेहभक्तीनामेकमालम्बनं महत् ।
प्रकृष्टस्येव धर्म्मस्य प्रसादो मूर्त्तिसञ्चरः § ॥

आश्चर्य्यम् ।

---

* मत्तोऽविशेषेणाविलक्षणेन, मामिवेत्यनेनैव शब्देनैवैतदर्थोपपत्तौ पुनरविशेषेणेत्याद्युपादानं सर्व्वथानुपेक्षणीयत्वज्ञापनायेति बोध्यम् ।

† महावीरप्रकाण्डं महावीरश्रेष्ठम् । प्रकाण्डमित्यत्र प्रशंस्यमिति क्वचित्पाठः ।

‡ ब्रह्म वोच्यते प्रकाश्यतेऽनेनेति ब्रह्मवोबेदस्तस्य । जगतां पुण्यनिर्म्माणस्य पुण्यक्रियायाराशिः समूहः । आविर्भूय मूर्त्तिमान् भूत्वा ।

§ आश्वासेत्यादि आश्वासोऽभयदानं स्नेहः प्रेम भक्तिः सेवा एतासामेकमद्वितीयं महदत्युत्कृष्टमालम्बनमधिकरणम् अत्र भक्तेरधिकरणत्वमुद्देश्यतयेत्यवधेयम् । मूर्त्तिसञ्चरो मूर्त्तिमान् ।

विरोधो विश्रान्तः, प्रसरति रसो निर्वृतिघन
स्तदौद्धत्यं क्कापि व्रजति, विनयः प्रह्वयति माम्।
झटित्यस्मिन् दृष्टे किमपि परवानस्मि, यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः * ॥

रामः। तत्किमेकपद एव दुःखविश्रामं ददात्युपस्नेहय तिच कुतोऽपि निमित्तादन्तरात्मानम्, अथवा स्नेहस्य निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत्।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु
र्नखलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः † ॥

लवः। चन्द्रकेतो! कएते।

चन्द्र। प्रियवयस्य! ननु तातपादाएते।

लवः। ममापि तर्हि धर्मतस्तथैव, यतः प्रियवयस्य

---

* निर्वृतिघन, आनन्दनिविडः रसः शान्ताख्यः अनुरागो वा प्रसरति उत्पद्यते, यदिवेति सम्भावनायां, तीर्थानामिव महतां कोऽप्यनिर्व्वचनीयोऽतिशय उत्कर्षो महार्घ आदरणीयः।

† व्यतिषजति मिथःप्रणयवद्धान् करोति। बहिरुपाधीन् बाह्यहेतून् पुत्रत्वपोत्रत्वादीन्। संश्रयन्ते अपेक्षन्ते। पतङ्गस्य सूर्य्यस्य। उत्तापकस्य सूर्य्यस्योदये अतिकोमलपुण्डरीक-विकाशः दृढताविधायिहिमरश्मेरुदये अतिकठिनचन्द्रकान्त द्रवश्च कुतश्चिद्गूढकारणादेव जायते वाह्यकारणापेक्षायां तद्वि-परीतमेव स्यादित्यर्थः।

इत्यात्थ, * किन्तु चत्वारः खलु भवतामेवंव्यपदेशभागिन स्तत्रभवन्तो रामायणकथापुरुषा,स्तद्विशेषं ब्रूहि । †

चन्द्र । ननु ज्येष्ठतातपादा इत्यवेहि ।

लवः । सोल्लासं । कथं रघुनाथएषः, दिष्ट्या सुप्रभातमद्य,यदयं देवोदृष्टः, सविनयकौतुकं निर्व्वर्ण्य । तात प्राचेतसान्तेवासी लवोऽभिवादयते ।

रामः । सस्नेहम् । आयुष्मन्नेह्येहि । सस्नेहं परिष्वज्य । अयि वत्स कृतंकृतमतिविनयेन, अनेकवारमपरिश्लथं परिष्वजस्व ।

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः ।
नन्दयति चन्द्रचन्दननिस्यन्दजडस्तव स्पर्शः ‡ ॥

लवः । स्वगतम् । ईदृशोऽस्मादृशान् प्रति अमीषामकारणस्नेहः, मया पुनरेभ्यएवाभिद्रुग्धमज्ञेन, यदायुधपरिग्रहं यावदत्यारूढ़ोदुर्य्योगः § । प्रकाशं । मृष्यन्त्विदानीं लवस्य वालिशतां तातपादाः ।

---

* तथैव तातपादाएव, आत्थेति मामितिशेषः, वयस्यतातस्य तातस्थानीयत्वादितिभावः ।

† एवंव्यपदेशभागिनः तातपदवाच्याः । विशेषं प्रथमं द्वितीयं वेत्यादिकम् ।

‡ परिणतं चिरप्रस्फुटितम् अतएव कठोरं यत् पुष्करं पद्मं तस्य गर्भच्छदो मध्यदलं तद्वत् पीनोऽतिवहुलः मसृणोऽतीक्ष्णः सुकुमारोमृदुलश्च, विशेषणानां कर्म्मधारयः । चन्द्रचन्दनयोर्निस्यन्दः सम्पर्कस्तद्वज्जडो जाड्यजनकः ।

§ कथमस्याभिद्रोहः कृतइत्यत्राह यदित्यादि यस्मात् आयुधपरिग्रहं यावत् आयुधं परिगृह्य दुर्य्योगः अश्वहरणसैन्यमोहनादिरूपदुश्चेष्टितमत्यारूढः अत्यारूढ़ता औद्धत्येन प्राप्तः । कर्म्मणि क्तः ।

रामः। किमपराद्धं वत्सेन।

चन्द्र। अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन।

रामः। नन्वयमलङ्कारः क्षत्रस्य।

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वोभावः प्रकृतिनियतत्वादकृतकः।
मयूखैरश्रान्तं तपति यदि देवोदिनकरः
किमाग्नेयग्रावा निकृतइव * तेजांसि वमति॥

चन्द्र। तात अमर्षोऽप्यस्य शोभते वीरस्य, परन्तु प्रियवयस्यविनियुक्तजृम्भकास्त्रनिष्कम्पस्तम्भितानि सर्व्वतः सैन्यानि।

रामः। विलोक्य। वत्स लव संह्रियन्तामस्त्राणि, त्वमपि चन्द्रकेतो निर्व्यापारविलक्षितानि सान्त्वय बलानि।

लवः। यथाज्ञापयति तात इति प्रणिधानं नाटयति।

चन्द्र। यथादिष्टमिति निष्क्रान्तः।

लवः। प्रशान्तमस्त्रम्।

रामः। वत्स! सरहस्यप्रयोगसंहरणान्यस्त्राण्याम्नायवन्ति †।

ब्रह्मादयोब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि।
एतान्यपश्यन् गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि॥

---

* निकृतइव धिक्कृतइव।

† सरहस्याः समन्त्रकाः प्रयोगाः संहरणाश्च येषां तानि, आम्नायवन्ति गुरुपारम्पर्य्योपदेशवन्ति गुरूपदेशेन प्राप्याणीत्यर्थः।

अथैतन्मन्त्रपारायणोपनिषदं भगवान् कृशाश्वः परःसहस्रपरिवत्सरान्तेवासिने कौशिकाय विश्वामित्राय प्रोवाच, सतु भगवान् मह्यमित्येषतु पूर्व्वानुक्रमः। कुमारस्य पुनः कुतः संप्रदाय * इति पृच्छामि।

लवः। स्वतःप्रकाशान्यावयोरस्त्राणि।

रामः। विचिन्त्य। प्रकृष्टपुण्यपरिपाकोपादानः † कोऽपि महिमा स्यात्, द्विवचनन्तु ‡ कथम्।

लवः। भ्रातरावावां यमजौ।

रामः। स तर्हि द्वितीयः क्व।

नेपथ्ये। भाण्डायन भाण्डायन।

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै
र्योधनं ननु किमात्थ सखे तथेति § ।
अद्यास्तमेतु भुवनेष्वधिराजशब्दः
चत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥

रामः। अथ कोऽयमिन्द्रमणिमेचकच्छवि
र्ध्वनिनैव दत्तपुलकं करोति माम्।

---

* कुतोगुरोः संप्रदायः उपदेशः।

† प्रकृष्टं यत्पुण्यं तस्य परिपाकः फलोन्मुखीभावः सएवोपादानं कारणं यस्य सः।

‡ द्विवचनन्त्विति आवयोरित्यनेति शेषः।

§ ननु भोः सखे नरेन्द्रसैन्यैः सह लवस्यायोधनं युद्धं तथेति सत्यमिति किमात्थ सत्यमेव युद्धं भवतीति किं ब्रवीषि।

नवनीलनीरधरधीरगर्ज्जित

क्षणबद्धकुड्मलकदम्बडम्बरम् * ॥

लवः । अयमसौ मम ज्यायानार्य्यः कुशोनाम भरताश्रमात् प्रतिनिवृत्तः ।

रामः । सकौतुकम् । वत्स इतएवाकर्षयैनमथायुष्मन्तम् ।

लवः । एवमिति परिक्रामति ।

ततः प्रविशति कुशः ।

कुशः । साद्भुतदर्पधैर्य्यं धनुरास्फालयन् ।

दत्तेन्द्राभयदक्षिणैर्भगवतोवैवस्वतादामनो

दृप्तानां दमनाय दीपितनिजक्षत्रप्रतापाग्निभिः ।

आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो

दिव्यास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः † ॥

विकटं परिक्रामति ।

रामः कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेकः ।

---

* नवः प्रावृट्प्रारम्भसमुदितः अतएव उज्ज्वलत्वान्नीलश्च यो नीरधरोमेघस्तस्य यद्धीरं गभीरं गर्ज्जितं तस्य क्षणएव बद्धः कुड्मलोमुकुलो येन तादृशोयः कदम्बोनीपद्रुमस्तस्येव डम्बर उत्कर्षः शोभेत्यर्थः यस्य तम् ।

† दत्ता इन्द्राय अभयमेव दैत्येभ्यो निर्भयत्वमेव दक्षिणा अश्वमेधादियज्ञदेयदानदक्षिणा यैः । आदित्यैः सूर्य्यवंशीयैः । ततस्तर्हि । दिव्यास्त्राणां याः स्फुरन्त्य उग्राभयदाश्च दीधितयस्तासां शिखाभिर्नीराजिता शोभिता ज्या यस्य तद्धनुर्धन्यं सार्थकम् ॥

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता * नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥

लवः । उपसृत्य । जयत्यार्य्यः ।

कुशः । नन्वायुष्मन् किमियं वार्त्ता युद्धं युद्धमिति ।

लवः । यत्किञ्चिदेतत्, उदृप्तभावमुत्सृज्यार्य्योऽस्मिन् विनयेन वर्त्तताम् ।

कुशः । किमर्थम् ।

लवः । अत्र देवो रघुपतिस्तिष्ठति, स च स्निह्यत्यावयोरुत्कण्ठते च युष्मत्सन्निकर्षस्य ।

कुशः । सतर्कं । स रामायणकथानायको ब्रह्मघोषस्य गोपायिता । †

लवः । अथ किम् ।

कुशः । आशंसनीयपुण्यदर्शनः ‡ स महात्मा, किन्तु कथ § मस्माभिरुपगन्तव्य इति न संप्रधारयामि ।

लवः । यथा गुरुस्तथोपचारेण ।

कुशः । अपि कथं नामैतत् ।

* तृणीकृतस्तुच्छत्वेन गणितो जगत्त्रयस्य सत्त्वसारो बलोत्कर्षो यया सा दृष्टिः । धीरा अद्भुता उद्धता शौर्य्यव्यञ्जिका च ।

† ब्रह्मघोषस्य वेदस्य वेदाध्यायिनो ब्राह्मणगणस्य वा गोपायिता रक्षकः ।

‡ आशंसनीयमभिलषणीयं पुण्यं पवित्रं दर्शनं यस्य सः ।

§ कथं कीदृशेनोपचारेण ।

लवः। अत्युदात्तसुजनश्चन्द्रकेतुरोर्मिलेयः प्रियवयस्य इति सख्येन मामुपतिष्ठते, तेन तत्सम्बन्धेन च धर्मतात एवायं राजर्षिरिति।

कुशः। संप्रति करणीयो राजन्येऽपि प्रश्रयः।

लवः। पश्यैनमाकारानुभावगाम्भीर्य्यसम्भाव्यमानविविधलोकोत्तरचरितातिशय * माद्यामहापुरुषम्।

कुशः। निर्व्वर्ण्य।

अहो प्रामोदिकं रूपमनुभावश्च पावनः।
स्थाने रामायणकविर्देवीं वाचं व्यवीवृधत् †॥

उपसृत्य। तात प्राचेतसान्तेवासी कुशोऽभिवादयते।

रामः। एह्यायुष्मन्।

अमृताध्मातजीमूतस्निग्धसंहननस्य ते ‡।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः॥

परिष्वज्य स्वगतम्। तत्किमपत्य § मयं दारकः।

---

* आकार आकृतिरनुभावः प्रभावः गम्भीर्य्यमथक्षाशयत्वम लुब्धाशयत्वम्बा तैः सम्भाव्यमानः अन्वेयः विविधो लोकोत्तरोऽसामान्यचरितातिशयः वाल्मीकिवर्णितचरित्रोत्कर्षोयस्य तम्।

† प्रामोदिकं प्रमोदजनकं रूपमाकारः। व्यवीवृधत् एतचरित्रवर्णनेन प्रीतां चकार, वृध प्रीतावित्यस्मात्सिद्धन्ताङ्ङि रूपम्।

‡ अमृतध्मातो जलपूर्णो जीमूतोमेघस्तद्वत् स्निग्धं संहननं देहोयस्य तस्य।

§ किमपत्यं मदीयः पुत्रः किम्, अकारणप्रश्रयोद्भावनादियं सम्भावना।

अङ्गादङ्गाच्च्युत इव निजः स्नेहजो देहसारः
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेव ।
सान्द्रानन्दक्षुभितहृदयप्रस्रवेनावसृष्टो
गात्रं स्नेषे यदमृतरसस्रोतसा सिञ्चतीव ॥

लवः । तात ललाटन्तपो घर्म्मदीधितिस्तदत्र शालच्छाये मुहूर्त्तमासनपरिग्रहं करोतु तातः ।

रामः । यदभिरुचितं वत्साय ।

सर्व्वे परिक्रम्योपविशन्ति ।

रामः । स्वगतम् ।

---

* अङ्गादङ्गात्सकलावयवेभ्यश्च्युतो गलितः निजः स्वीयः स्नेहजः प्रेमसंभृतः घृतादिस्नेहजात इत्यन्ये, वस्तुतस्तु स्नेहद इत्येव पाठः सम्यक्, प्रणयास्पदमित्यर्थः ईदृशो देहसार इव देहस्योत्कृष्टां शः किम्, सर्व्वविषयापेक्षया स्वदेहस्य प्रियत्वात्तदुत्कृष्टांशस्य च ततोऽपि प्रियतमत्वादियमुत्प्रेक्षा । तथा प्रादुर्भूय देहान्निःसृत्य मूर्त्तिमान् भूत्वा वहिःस्थितः चेतनां दधाति धारयतीति चेतना धातुः प्रत्यगात्मेव देहसारापेक्षयापि आत्मनः प्रियतमत्वादियं द्वितीयोत्प्रेक्षा, आत्मा वैजायते पुत्र इतिश्रुतेर्युज्यते चेयं सम्भावना, आत्मनश्चेतनावत्त्वं न्यायमतसिद्धं, वेदान्तमते तु चेतना चैतन्यं देहस्थितिहेतुत्वात् धातुरिवेति समासः । कुत इत्याह सान्द्रानन्देन क्षुभितं वृद्धिं प्राप्तं यद्धृदयं तस्य प्रस्रवेन क्षरणेन अवसृष्टः क्षालितः हर्षातिशयदीर्घया चित्तवृत्त्या विषयीकृत इत्यर्थः । ईदृशोऽयं स्नेषे आलिङ्गने सति यद्यस्मात् अमृतरसस्रोतसेव गात्रं सिञ्चति सुखयति अतः पुत्र एवायमित्यर्थः ।

अहो प्रश्रययोगेऽपि गतिस्थित्यासमादयः ।
सामान्यसंसिनो भावाः कुशस्य च लवस्य च ॥
वपुरविहितसिद्धा एव लक्ष्मीविलासाः
प्रतिजनकमनीयं कान्तिमत् केतयन्ति ।
अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा
विकसितमिव पद्मं विन्दवो माकरन्दाः ॥ *

भूयिष्ठाञ्च रघुकुमारच्छाया † मनयोः पश्यामि ।
कठोरपारावतकण्ठमेचकं वपुर्वृषस्कन्धसबन्धुरांसकम् ‡ ।
प्रसन्नसिंहस्तिमितञ्च वीक्षितं ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥

सूक्ष्मं निरूप्य । अये न केवलमस्मदङ्गसंवादिन्याकृतिः ।
अपि जनकसुतायास्तच तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति । §

---

* वनचरयोः कथं सामान्यसम्भावनेत्यत आह वपुरिति । अविहितसिद्धा अकृत्रिमा लक्ष्मीविलासाः शोभाविशेषा एव कान्तिमत् तथा प्रतिजनकमनीयं सर्व्वलोकहृदयङ्गमं वपुः केतयन्ति भाविसमृद्धिकत्वेन सूचयन्ति, उपमाभ्यामिदं दृढयति अमलिनेत्यादि । ते प्रसिद्धाः । माकरन्दाविन्दवः वायुना नीयमानामधुविन्दवः ।

† रघुकुमाराणां छायां कान्तिम् ।

‡ अबन्धुरांसकमित्यत्र अबन्धुरांसयोरिति पाठे अनयोरित्यस्य विशेषणम् ।

§ अनुरूपं सादृश्यं । नैपुणेन निपुणत्वेन उन्नेयं ज्ञेयम्, अ; नैपुणोन्नेयमिति पाठे नैपुणमन्तरेणापि ज्ञेयं स्फुटं प्रतीयमानमित्यर्थः ।

ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥

मुक्ताच्छदन्तच्छविदन्तुरेयं सैवौष्ठमुद्रा स च कर्णपाशः ।
नेत्रे पुनर्यद्यपि रक्तनीले तथापि सौभाग्यगुणः स एव *॥

तदेतत् प्राचेतसाध्युषितमरण्यं, यत्र किल देवी परित्यक्ता, इयञ्चानयोराकृतिर्वयश्च, यदपि स्वतःप्रकाशान्यस्त्राणीति, तत्र विमृशामि, अपि खलु तच्चित्रदर्शनप्रासङ्गिकमस्त्राभ्यनुज्ञानमुद्भूतं स्यात्, नह्यसांप्रदायिकान्यस्त्राणीति पूर्व्वेषामथनुशुश्रुमः, अयञ्च संप्लवमानमात्मानं सुखातिशयो हृदयस्य † मे विप्रलभते, भूयिष्ठञ्च मया द्विधा प्रतिपन्नो देव्या गर्भिणीभाव आसीत् । सास्रम् ।

पुराऽरूढे स्नेहे परिचयविकासादुपचिते
रहोविश्रम्भाया अपि सहजलज्जाजडदृशः ।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधागर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ‡ ॥

रुदित्वा । तत्किमेतौ पृच्छामि केनाप्युपायेन ।

लवः । तत्किमेतत् ।

---

* ओष्ठस्य मुद्रा आकृतिः । कर्णपाशः सुन्दरः कर्णः । रक्तनीले इति वीरपुरुषसम्बन्धित्वादितिभावः । सौभाग्यगुणः सौन्दर्य्यम् ।

† हृदयस्य सुखातिशयः संप्लवनानं चञ्चलीभवन्तमात्मानं विप्रलभते प्रतारयति संशये पातयतीत्यर्थः ।

‡ करतलपरामर्शकलया करतलेन संवाहनक्रीडया । तयेति अत्रापि कारीऽध्याहार्य्यः, अस्य च ज्ञात इत्यनेनान्वयः ।

वाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम् ।
अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् ॥ *

कुशः । अयि वत्स !

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति ।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमित्येवं पृच्छस्यनधिगतरामायण इव ॥ †

रामः । स्वगतम् । अये तटस्थित आलापः, कृतं प्रश्नेन ‡ दग्ध हृदय ! कोऽयमाकस्मिकस्ते स्नेहपरिप्लवो विकारः, एवञ्च निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि, भवतु तावदन्तरयामि । प्रकाशम् । वत्सौ रामायणमिति श्रूयते, भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः § प्रशस्तिरादित्यवंशस्य, तत्र कौतूहलेन यत्किञ्चिच्छ्रोतुमिच्छामि ।

कुशः । स कृत्स्न एव सन्दर्भोऽस्माकमावृत्तः ¶ स्मृतिप्रत्युपस्थितौ तावदिमौ बालचरितस्यान्तेऽध्याये द्वौ श्लोकौ ।

रामः । उदीरयतु वत्सः ।

---

* जगन्मङ्गलं जगतां मङ्गलं यस्मात्तत् । अवश्यायावसिक्तस्य हिमजलव्याप्तस्य ।

† अनधिगतरामायण इव रामायणमधीत्यापि रामस्य सीतावियोगदुःखमजानन्निव ।

‡ तटस्थित उदासीनविषयकत्वात् क्षणिकः, इतः परं न भविष्यतीत्यर्थः ।

§ सरस्वतीनिष्यन्दः वाक्परिणामः ।

¶ आवृत्तः पुनःपुनरधीतः ।

कुशः। प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः।
प्रियभावः स तु तया स्वगुणैरेव वर्द्धितः॥
तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत्।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम्॥ इति॥

रामः। कष्टमतिदारुणो हृदयमर्म्मोपघातः, हा देवी एवं किल तदासीत्। अहो निरन्वयविपर्य्यासविरसवृत्तयोविप्रलम्भपर्य्यवसायिन * स्तापयन्ति संसारवृत्तान्ताः।

क्व तावानानन्दोनिरतिशयविश्रम्भबहुलः,
क्व तेऽन्योन्यं यत्नाः, क्वचन गहनाः कौतुकरसाः।
सुखे वा दुःखे वा क्वनु खलु तदैक्यं हृदययो
स्तथा † प्येष प्राणः स्फुरति नतु पापोविरमति॥

भोः कष्टम्।

प्रियागुणसहस्राणामेकोन्मीलनपेशलः। ‡
यएव दुःस्मरः कालस्तमेव स्मारितावयम्॥
तदा किञ्चित्किञ्चित्कृतपद § महोभिः कतिपयै
स्तदोषद्विस्तारिस्तनयुगलमासीन्मगद्वयः।

---

* निरन्वयो निःसम्बन्धः हठादुत्पन्न इत्यर्थः विपर्य्यासो वैपरीत्यं तेन विरसा दुःखदा वृत्तिर्येषां ते, विप्रलम्भपर्य्यवसायिनः वियोगपरिणामाः।

† तथापि तादृशानन्दादिविगमेऽपि।

‡ एकोऽद्वितीयश्चासौ उन्मीलनपेशलः प्रकाशनचतुरश्चेति कर्म्मधारयः। एकोन्मीलनेत्यत्र समुन्मीलनेति पाठः सम्यक्।

§ किञ्चित्किञ्चित्कृतपदं क्रमेणाल्पमल्पमुत्थितमित्।

वयःस्नेहाकूतव्यतिकरघनोयत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धस्य वपुषि ॥ *

कुशः। अयञ्च मन्दाकिनीचित्रकूटवनविहारे † सीता देवीमुद्दिश्य रघुपतेः श्लोकः।

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमग्रतः।
यस्यायमभितः पुष्पैः प्रवृष्टइव केसरः ॥ ‡

रामः। सलज्जितस्नेहकरुणम्। अतिनामायं मुग्धः शिशुजनोविशेषतस्त्वरण्यचरः। हा देवि स्मरसि वा तस्य प्रदेशस्य तत्समयविस्रम्भातिशयप्रसङ्गसाक्षिणः § भोः कष्टम्।

अमाम्बुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी
मरुत्तरलितालकाकुलललाटचन्द्रद्युति।

---

* हृदि वपुषिच वयसोयौवनस्य यौवनचिह्नस्येत्यर्थः स्नेहस्य प्रेम्णः आकूतस्य तत्तदभिप्रायस्यच व्यतिकरेण सम्पर्केण घनोनिविडः अतएव मुग्धोमनोज्ञः तथा प्रगल्भः प्रबलोव्यापारः प्रवृत्तिर्यस्य तादृशोमदनो यत्र काले स्फुरति। अत्र हृदयवपुषोर्वयःस्नेहाकूतानां यथायोगं सम्बन्धाबोद्धव्यः।

† मन्दाकिनी गङ्गा तन्नाम्नी काचिन्नदी वा चित्रकूटः पर्व्वतविशेषः तयोर्वनं अत्रमरण्यञ्च तयोर्विहारे क्रीडायाम्।

‡ त्वदर्थं तवोपभोगार्थं। शिलापट्टः शिलाफलकः प्रत्यन्तपर्व्वतः। यस्य शिलापट्टस्याभितः समन्तात्। अभितोयोगे द्वितीया प्राप्ता सर्व्वापवादकत्वात् षष्ठी। पुष्पैः पुष्पपतनैः प्रवृष्ट इव वृष्टिं कुर्व्वन्निव, कर्त्तरि क्तः। केसरोवकुलवृक्षः।

§ तत्समये विस्रम्भातिशयेन विश्वासबाहुल्येन ये प्रसङ्गा व्यापारास्तेषां साक्षिणः द्रष्टुकस्य। कर्म्मणि षष्ठी।

अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशसौम्यं मुखम् ॥ *

स्तम्भितइव स्थित्वा । सकरुणम् । अहो नु खलु भोः ।

चिरं ध्यात्वा ध्यात्वा निहितइव निर्माय पुरतः †
प्रवासेऽप्याश्वासं न खलु न करोति प्रियजनः ।
जगज्जीर्णारण्यं भवति हि विकल्पव्युपरमे
कुकूलानां ‡ राशौ तदनु हृदयं पच्यतइव ॥

नेपथ्ये ।

वशिष्ठोवाल्मीकिर्दशरथमहिष्योऽथ § जनकः
सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।
जरायस्तैर्गात्रैरथ खलु विदूराश्रमतया
चिरेणागच्छन्ति त्वरितमनसोऽपि श्रमजडाः ॥

रामः । कथं भगवत्यावरुन्धतीवशिष्ठौ, अम्बा, जनकश्चात्रैव, कथं खल्वेते द्रष्टव्याः । सकरुणं विलोक्य । अहह

---

* तव मुखमुत्प्रेक्ष्यते मया स्मर्य्यते इत्यन्वयः किम्भूतं श्रमाम्बुशिशिरीभवत् घर्म्माम्भसा शीतलं । तथा एतते गमने मन्दोद्योमन्दाकिनीमरुत् तेन तरलितैरलकैराकुलोव्यामो ललाटं चन्द्र इव स तथा, तेन द्युतिर्यस्य तत्, तथा अकुङ्कुमकलङ्कितौ कुङ्कुमचिह्नशून्यावपि उज्ज्वलौ कपोलौ यत्र तत्, तथा निराभरणावपि कुण्डलादिशून्यावपि सुन्दरौ यौ श्रवणपाशौ ताभ्यां सौम्यं मनोज्ञम् ।

† चिरं ध्यात्वा ध्यात्वा भ्रमविजृम्भमाणया तन्मयतावस्थया निर्म्मायेव पुरतोऽग्रे निहितः सन्निधापितः ।

‡ कुकूलानां तुषाग्नीनाम् ।

§ दशरथमहिष्य इति एकत्वेऽपि गौरवे बहुवचनम् ।

तातजनकस्तु दैवादत्रैवायात इति वज्रेणैव ताडितोऽस्मि मन्दभाग्यः ।

सम्बन्धस्पृहणीयताप्रमुदितैर्ज्युष्टं वशिष्ठादिभि
र्दृष्टापत्यविवाहमङ्गलमहो तत्तातयोः सङ्गतम् ।
पश्यन्नीदृशमीदृशे पितृसखं वृत्ते महावैशसे
दीर्य्ये किन्न सहस्रधाहं † मथवा रामेण किं दुष्करम् ॥

नेपथ्ये । कष्टं कष्टम् ।

अनुभावमात्रसमुपस्थितश्रियं ‡
सहसैव वीक्ष्य रघुनाथमीदृशम् ।
प्रथमप्रमूढजनकप्रबोधनाद्
विधुराः प्रमोहमुपयान्ति मातरः ॥

रामः । हा तात, हा मातरः, हा जनक ।

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम् ।
तस्मिन्न § करुणे पापे वृथा वः करुणा मयि ॥

यावत् सम्भावयामि । इत्युत्तिष्ठति ।

कुशलवौ । इतइतस्तातः । सकरुणं परिक्रम्य निष्क्रान्ताः सर्व्वे ।

॥ इति कुमारप्रत्यभिज्ञानो नाम षष्ठोऽङ्कः ॥

---

* तातयोर्दशरथजनकयोः सङ्गतं सङ्गम आसीदिति शेषः ।

† ईदृशे महावैशसे महाविपदि वृत्ते जाते सति ईदृशमनभूततत्सङ्गतिसुखं पितृसखं जनकं पश्यन्नहं किं न सहस्रधा दीर्य्ये विदीर्णो न भवामीत्यन्वयः ।

‡ अनुभावमात्रे ननु शरीरादौ समुपस्थिता श्रीर्यस्य तम् ।

§ तस्मिन् सीताह्वये गोत्रमङ्गले अकरुणे निर्दये मयि ।

अथ सप्तमोऽङ्कः ।

ततः प्रविशति लक्ष्मणः ।

लक्ष्मणः । भोभो भगवता खलु वाल्मीकिना सब्रह्मक्षत्र पौरजानपदाः प्रजाः * सहास्माभिराहूय इतश्चएव सदेवासुरतिर्य्यगुरगनायकनिकायो जङ्गमः स्थावरश्च भूतग्रामः † स्वप्रभावेण सन्निधापितः, आदिष्टश्चाहमार्य्येण, वत्स लक्ष्मण! भगवता वाल्मीकिना स्वकृति ‡ मप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः, तद्गङ्गातीरमातोद्यस्थान § मुपगम्य क्रियतां समाजसन्निवेश इति । इतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानेषु समुपवेशनं मया, अयन्तु ।

राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः ¶ ।
वाल्मीकिगौरवादार्य्य इतएवाभिवर्त्तते ॥

---

* ब्राह्मणक्षत्रियाणां पौरजानपदप्रजात्वेन प्राप्तावपि सब्रह्मक्षत्रेत्युपादानं तेषां प्राधान्यद्योतनार्थम् ।

† तिर्य्यञ्चः पशुपक्षिणः सुग्रीवगरुडादयः, देवैः सह वर्त्तमाना ये असुरतिर्य्यगुरगाणां नायकाः, एतच यक्षराक्षसकिन्नरादि जङ्गमानां सुमेरुहिमालयादिस्थावराणाञ्चोपलक्षकं, तेषां निकायः समूहो यत्र सः । स्थावरश्चेति न सर्व्वत्र पुस्तकेषु दृश्यते किन्तु सजङ्गमस्थावरं जगदाश्चाययतीत्युत्तरसन्दर्भस्वरसादेतद्युक्ततरं प्रतिभाति । सन्निधापनञ्च स्थावराधिष्ठातृणामिति बोध्यम् ।

‡ स्वकृतिं स्वरचितं किमपि रूपकम् ।

§ आतोद्यस्थानं रङ्गवाटम् ।

¶ प्राप्तं कष्टं क्लेशकरं मुनिव्रतं ब्रह्मचर्य्यं येन सः ।

ततः प्रविशति रामः ।

रामः । वत्स लक्ष्मण ! अपि स्थिता रङ्गप्रेक्षकाः ।

लक्ष्म । अथ किम् ।

रामः । इमौ पुनर्वत्सौ कुशलवौ चन्द्रकेतुसदृशीं स्थानप्रतिपत्तिं * लम्भयितव्यौ ।

लक्ष्म । प्रभुस्नेहप्रत्यया † तथैव कृतम् । इदन्त्वास्तीर्णं राजासनमुपविशत्वार्य्यः ।

रामः । उपविशति ।

सर्व्वे चोपविशन्ति ।

रामः । प्रस्तूयतां भोः ।

प्रविश्य सूत्रधारः ‡ । भोभो भगवान् भूतार्थवादी प्राचेतसः सजङ्गमस्थावरं जगदाज्ञापयति, यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनकरुणाद्भुतरसं किञ्चिदुपनिबद्धं, तत्र कार्य्यगौरवादवधातव्यमिति । §

---

* स्थानप्रतिपत्तिं स्थानविशेषदानेन गौरवम् । प्रतिपत्तिः प्रवृत्तौ च प्रागल्भे गौरवेऽपिचेति मेदिनी ।

† प्रभोस्तव यः स्नेहः कुशलवौ प्रति वात्सल्यं तस्य प्रत्ययात् ज्ञानात् ।

‡ गर्भाङ्कमारभते प्रविश्येत्यादि । सचोक्तोदर्पणे, अङ्कोदरं प्रविष्टो यो रङ्गद्वारामुखादिमान् । अङ्कोऽपरः सगर्भाङ्कः सवीजः फलवानपीति ।

§ भूतार्थवादी सत्येतिहासवक्ता । आर्षेण चक्षुषा योगरूपयादृष्ट्या । किञ्चित् किमपि रूपकम् । कार्य्यगौरवात् प्रस्ताव्याभिधेयादरेण ।

रामः। एतदुक्तं भवति *। साक्षात्कृतधर्माण ऋषयः, तेषाममृतसाराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद्व्याहन्यन्त इत्यनभिशङ्कनीयानीति †।

नेपथ्ये। हा अज्जउत्त! हा कुमार लक्खण! एआइणीं मन्दभाइणीं असरणं अरण्णे आसण्णप्पसववेअणं हदासं सावदा मं अहिलसन्ति, साहं दाणिं मन्दभाइणी भाईरधीए अत्ताणं णिक्खिवेमि। (१)

लक्ष्म। आत्मगतं। कष्टं वतान्यदेव किमपि।

सूत्र। विश्वम्भरात्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं ‡ गङ्गादेव्यां विमुञ्चति॥

इति सूत्रधारो निष्क्रान्तः।

---

(१) हा आर्य्यपुत्र, हा कुमार लक्ष्मण, एकाकिनीं मन्दभागिनीमशरणामरण्ये आसन्नप्रसववेदनां हताशां श्वापदा मामभिलषन्ति, साहमीदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षिपामि। अभिलषन्ति भक्षणार्थं प्रार्थयन्ते। निक्षिपामीति मरणार्थमिति शेषः।

---

* एतद्वक्ष्यमाणम्, उक्तं भूतार्थवादीत्यनेन आर्षेण चक्षुषा-समुदीक्ष्येत्यनेन च प्रतिपादितम्।

† अमृतसाराणि अमृतवत् सारवन्ति, अमृतं ब्रह्म सरन्ति विषयीकुर्व्वन्तीत्यमृतसाराणीति वा, परोरजांसि सात्त्विकानि, प्रज्ञानान्यनुभवाः। व्याहन्यन्ते विहतानि न भवन्ति। ऋषयो हि विशुद्धानुभवेन यत्यद्विषयीकृत्य वर्णयन्ति तत्तत्सत्यमेव भवतीत्यर्थः अनभिशङ्कनीयानि अविकल्पं मन्तव्यानि।

‡ प्राप्तप्रसवम् आसन्नप्रसवकालम् आत्मानं देहम्।

रामः । देवि क्षणमपेक्षस्व ।

लक्ष्म । आर्य्य नाटकमिदं नाटकमिदम् ।

रामः । हा देवि दण्डकारण्यवासप्रियसखि ! एषते रामाद्दैवदुर्विपाकः ।

लक्ष्म । आर्य्य दृश्यतां तावत्प्रबन्धार्थः ।

रामः । एष सज्जोऽस्मि वज्रमयः ।

ततः प्रविशत्युत्सङ्गितैकैकदारकाभ्यां पृथ्वीगङ्गाभ्यामवलम्बिता सीता ।

रामः । वत्स लक्ष्मण ! असंविज्ञातमनिबन्धनं तमइव प्रविशामि, * धारय माम् ।

गङ्गा । समाश्वसिहि कल्याणि दिष्ट्या वैदेहि वर्द्धसे ।
अन्तर्जले प्रसूतासि रघुवंशधरौ सुतौ ॥

सीता । समाश्वस्य । दिट्ठिआ दारके प्पसूदह्मि, हा अज्जउत्त । (१) इतिमूर्च्छति ।

लक्ष्म । पादयोर्निपत्य । आर्य्यार्य्य दिष्ट्या वर्द्धामहे, कल्याणप्ररोहो रघुवंशः । विलोक्य । हा हा कथं क्षुभितवाष्पोत्पीड़निर्भरः † प्रमुग्धएवार्य्यः । इति वीजयति ।

---

(१) दिष्ट्या दारकौ प्रसूतास्मि, हा आर्य्यपुत्र ।

---

* असंविज्ञातं पूर्व्वमननुभूतम्, अनिबन्धनमकारणमाकस्मिकमित्यर्थः तमो मोहम्, इवेत्यनेन किञ्चिच्चैतन्यसद्भावः सूचितः ।

† क्षुभितस्याविश्रामं गलतोवाष्पोत्पीडस्याश्रुप्रवाहस्य निर्भरो बाहुल्यं यत्र सः । यद्वा क्षुभितः क्षोभं गतः तथा वाष्पोत्पीडनिर्भरश्चेति विशेषणयोः कर्म्मधारयः ।

पृथ्वी । वत्से समाश्वसिहि समाश्वसिहि ।

सीता । आश्वस्य । भअवदि का तुमं इअं अ । (१)

पृथ्वी । इयन्ते श्वशुरकुलदेवता भागीरथी ।

सीता । भअवदि णमोदे णमोदे । (२)

भागी । चारित्रोपचितां कल्याणसम्पदमनुगच्छ ।

लक्ष्म । अनुगृहीताः स्मः ।

भागी । इयन्तु जननी ते वसुन्धरा ।

सीता । हा अम्ब ! ईदिसी अहं तुए दिट्टा । (३)

पृथ्वी । एहि वत्से ! एहि पुत्रि ! इति सीतामालिङ्ग्य मूर्च्छति ।

लक्ष्म । सहर्षं । दिष्ट्या पृथ्वीगङ्गाभ्यामभ्युपपन्ना आर्य्या ।

रामः । अवलोक्य । करुणतरं खल्वेतद्वर्त्तते, विश्वम्भरापि नाम व्यथत इति जितमपत्यस्नेहेन, यद्वा सर्व्वसाधारणो ह्येष मोहग्रन्थिरन्तश्चरश्चेतनावतामनुपप्लवः संसारतन्तुः ।*

भागी । वत्से वैदेहि ! देवि भूतधात्रि ! समाश्वसिहि ।

(१) भगवति का त्वमियञ्च ।

(२) भगवति नमस्ते नमस्ते ।

(३) हा अम्ब ईदृश्यहं त्वया दृष्टा । ईदृशी अतिदुःखिनी । दिट्टेत्यत्र धारिदपुव्वा इतिपाठः सम्यक् धृतपूर्व्वेति सं ।

* मोहो वात्सल्यहेतुत्वाद् ग्रन्थिर्यस्य, अन्योऽपि तन्तुर्ग्रन्थिविषमितोऽप्रतिविधेयो भवति । काकाक्षिन्यायेन चेतनावतामित्यस्य अन्तश्चर इत्यनेन अनुपप्लव इत्यनेन चान्वयः, अनुपप्लवोऽप्रतिविधेयः ।

पृथ्वी । देवि ! सीतां प्रसूय कथमाश्वसिमि * ।

एकश्चिरं राक्षसमध्यवासः साङ्गो, द्वितीयस्तु सुदुःश्रवोऽस्याः † ।

भागी । कोनाम पाकाभिमुखस्य जन्तोर्द्वाराणि दैवस्य पिधातुमीष्टे ‡ ॥

पृथ्वी । भागीरथि ! सह्यमुक्तम् । युक्तमेतद्वा रामभद्रस्य ।

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
नाहं न जनको नाग्निर्नानुवृत्तिर्न सन्ततिः § ॥

सीता । अज्जउत्तं सुमराविदम्हि । (१)

पृथ्वी । आः 'कस्तवार्य्यपुत्त्रः ।

सीता । सलज्जासं । जधा वा अम्बा भणादि । (२)

---

(१) आर्य्यपुत्त्रं स्मारितास्मि ।

(२) यथा वा अम्बा भणति । अधुना आर्य्यपुत्त्रे मम न कोऽपि सम्बन्धोऽस्तीत्यर्थः ।

---

* कथमाश्वसिमीति दुःखिता दुहिता मातुश्चिरं शोकाय भवतीति भावः ।

† साङ्गः समाप्तः, इदानीं तं नानुशोचामीत्यर्थः द्वितीयो जनापवादपूर्व्वकभर्तृपरित्यागरूपः ।

‡ पाकाभिमुखस्य फलोन्मुखीभूतस्य । द्वाराणि तत्तन्निमित्तानि । पिधातुं निवारयितुम् ।

§ पीडितः पाणिर्विवाह इत्यर्थः नहि कृतविवाहाया जनापवादश्रवणमात्रेणैव भुजिष्यादिवत् परित्यागो युज्यते, अग्निरग्निशुद्धिः । अनुवृत्तिः सहवनगमनादिरूपसन्तोषणव्यापारः, सन्ततिरिति गर्भवत्याः परित्यागादितिभावः ।

रामः । अम्ब पृथ्वि ! ईदृशोऽस्मि * ।

भागी । भगवति वसुन्धरे ! शरीरमसि † संसारस्य तत् किमसंविदानेव जामात्रे कुप्यसि ।

घोरं लोके विततमयशो, या च वह्नौ विशुद्धि
र्लङ्काद्वीपे, कथमिव जनस्तामिह श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत् समाराधनीयः
कृत्स्नो लोकस्तदतिगहनं ‡ किं स वत्सः करोतु ॥

लक्ष्म । अव्याहतान्तःप्रकाशा हि देवता भूतेषु, विशेषेण गङ्गा, तदयमञ्जलिस्ते § ।

रामः । अम्ब ! अनुवृत्तस्त्वया भगीरथगृहे प्रसादः ।

पृथ्वी । देवि ! नित्यप्रसन्नास्मि वः ¶ किन्त्वापातदुःसह स्नेहावेगेनैवं ब्रवीमि, न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ।

---

* ईदृशोऽस्मीति जनापवादव्याकुलेन मया विवाहादिकं सत्यं न गणितमित्यर्थः ।

† शरीरमसीति प्रायः प्रपञ्चानां पार्थिवत्वादितिभावः ।

‡ तत् कुलव्रतत्वेनाङ्गीकृतं लोकसमाराधनम् अति गहनमत्यन्तविषमं प्रियतमापरित्यागेनापि पालनीयमित्यर्थः ।

§ अव्याहतोऽप्रतिबन्धोऽन्तरन्तःकरणस्य प्रकाशो यस्याः सा । भूतेष्वित्यत्र, न तत्र फलया हेतुरित्यादिवत् षष्ठ्यर्थे सप्तमी । तदयमित्यत्र तथापीति पाठो न सम्यक् ।

¶ व इति युष्मदनुकम्पितानां भगीरथवंश्यानामित्यर्थः ।

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः।
लोकोत्तरेण सत्त्वेन * प्रजापुण्यैश्च जीवति॥

रामः। सकरुणा हि गुरवो गर्भरूपेषु †।

सीता। रुदती कृताञ्जलिः। णेदु मं अत्तणो अङ्गेसुं विलअं अम्बा। (१)

रामः। किमन्यद्ब्रवीतु।

गङ्गा। शान्तम्। अविलीना वत्सरसहस्राणि भूयाः।

पृथ्वी। वत्से! अपि रक्षणीयौ ते पुत्रकौ।

सीता। अणाधह्मि। (२)

रामः। हृदय! वज्रमयमसि ‡।

गङ्गा। कथं त्वं सनाथाप्यनाथा!

सीता। कीदिसं मम अभव्वाए सणाधत्तणं। (३)

देव्यौ। जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे।
आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते॥ §

लक्ष्म। आर्य्य श्रुतम्।

---

(१) नयतु मामात्मनोऽङ्गेषु विलयमम्बा।

(२) अनाथास्मि। अनाथत्वात् कथं पुत्रौ रक्षिष्यामीत्यर्थः।

(३) कीदृशं ममाभव्यायाः सनाथत्वम्। अभव्याया अमङ्गलायाः।

---

* सत्त्वेन धैर्य्येण।

† गर्भरूपेषु बालकेषु।

‡ वज्रमयमसि एतच्छ्रुत्वापि किं न विदीर्य्यसे इत्यर्थः।

§ प्रकृष्यते प्रकृष्टं भवति।

रामः । शृणोतु लोकः ।

नेपथ्ये । कलकलः ।

रामः । अद्भुततरं किमपि ।

सीता । किंत्ति अन्तरिक्खं पज्जाउलं । (१)

देव्यौ । ज्ञातम् ।

कृशाश्वः कौशिको राम इति येषां गुरुक्रमः । *

आविर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः ॥ †

नेपथ्ये । देवि सीते ! नमस्तेऽस्तु गतिः‡ नः पुत्रकौ हि ते ।

आलेख्यदर्शने देवो यदाह रघुनन्दनः ॥

सीता । दिट्ठिआ अत्थदेवदाओ परिप्फुरन्ति । (२)

लक्ष्म । उक्तमासीदार्य्येण, सर्व्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति ।

देव्यौ । नमो वः परमास्त्रेभ्यो राघवस्य परिग्रहात् । §

अनुध्यातैरुपेतव्यं वत्सयो,र्भद्रमस्तु वः ॥

---

(१) किमित्यन्तरिक्षं पर्य्याकुलं । पर्य्याकुलं सकलकलम् ।

(२) दिष्ट्या अस्त्रदेवताः परिस्फुरन्ति ।

---

* गुरुक्रम उपदेष्टृपारम्पर्य्यम् ।

† जृम्भकाणां प्राधान्यात् पृथङ्‌निर्द्देशः ।

‡ गतिराश्रयः ।

§ राघवस्य परिग्रहादिति नमस्कारं प्रति हेतुः । यद्वा परिगृह्यते अनेनेति परिग्रहोदानं तस्मात् रामस्याभ्यनुज्ञानादित्यर्थः अस्य च अनुध्यातैरुपेतव्यमित्यनेनान्वयः ।

रामः। क्षुभिताः * कामपि दशां कुर्व्वन्ति मम सांप्रतम्।
विस्मयानन्दसन्दर्भजर्ज्जराः करुणोर्म्मयः॥ †

देव्यौ। मन्यस्व वत्स ! रामभद्रस्याविदानीन्ते पुत्त्रकौ संवृत्तौ।

सीता। भअवदीओ ! को एदाणं खत्तिओचिदं कम्म करिस्सदि त्ति। (१)

रामः। एषां वशिष्ठगुप्तानां रघूणां वंशवर्द्धिनी।
कष्टं सीतापि सुतयोः संस्कर्त्तारं न विन्दति॥

देव्यौ। पुत्त्रि किं तवानया चिन्तया, एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेरर्पयिष्यावः, सएवैतयोः चत्त्रकृत्यं करिष्यति।

यथा वशिष्ठाङ्गिरसा ‡ ऋषी प्राचेतसस्तथा।
रघूणां जनकानाञ्च वंशयोरुभयोर्गुरुः॥

रामः। सुविचिन्तितं भगवतीभ्याम्।

---

(१) भगवत्यौ कएतयोः क्षत्रियोचितं कर्म्म करिष्यतीति।

---

* क्षुभिता उद्विक्ताः।

† विस्मयेत्यादि अहो गङ्गापृथिवीशब्ददेवतानामानुकूल्यमिति विस्मयः। मम वंशधरौ पुत्त्रौ जाताविव्यानन्दः, तयोः सन्दर्भोविस्तारः तेन जर्ज्जरामिश्रिताः, करुणोर्म्मयः हा पुत्राविमौ कथमनाथेयं तपस्विनी पालयिष्यतीति करुणरसोद्रेकाः।

‡ अाङ्गिरसः शतानन्दः।

लव । आर्य्य ! सत्यं विज्ञापयामि, तैस्तैरुपायैर्वत्सौ कुशल वावुत्प्रेक्षे । *

एतौ हि जन्मसिद्धास्त्रौ जातौ प्राचेतसान्मुनेः ।
वीरौ संप्राप्तसंस्कारौ † वयसा द्वादशाब्दिकौ ।

रामः । वत्स, 'इति परिप्लवमानहृदयः ‡ सुमुग्धोऽस्मि ।

पृथ्वी । एहि वत्से ! पवित्रीकुरु रसातलम् ।

रामः । हा प्रिये ! लोकान्तरमसि गता ।

सीता । णेदु मं अत्तणो अङ्गेसुं विलअं अम्बा, ण सक्कम्हि ईदिसं जीअलोअपरिवुत्तं अणुभविदुं ।(१)

रामः । किमुत्तरं स्यात् ।

पृथ्वी । स्तन्यत्यागं यावन्मन्नियोगतः पुत्त्रकयो § रपेक्षस्व, परेण ते यथा रोचिष्यते ।

(१) नयतु मामात्मनोऽङ्गेषु विलयमम्बा, न शक्नोम्मि ईदृशं जीवलोकपरिवृत्तमनुभवितुम् । जीवलोकस्य संसारस्य परिवृत्तं परिवर्त्तनमवस्थाविपर्य्ययमित्यर्थः ।

---

* उपायैरिति विशेषणे तृतीया, वत्सौ कुशलवौ तत्तदुपायैरुत्प्रेक्षे इत्यन्वयः । सीताया उत्पन्नौ गङ्गापृथिव्यानुकूल्येन परिपालितौ वाल्मीकिना च कृतसंस्कारौ विद्यापरिनिष्ठापितौ च जानामीत्यर्थः । यद्वा तैस्तैरुपायैर्गतिभिः कृत्वा कुशलवौ वत्सौ भवतः पुत्त्रावुत्प्रेक्षे इत्यन्वयः ।

† प्राचेतसान्मुनेः संप्राप्तसंस्कारौ जाताविलन्वयः ।

‡ इयस्मिन् विषये परिप्लवमानहृदयः सन्दिह्यानचित्तः ।

§ पुत्त्रकयोः स्तन्यत्यागं यावदित्यन्वयः ।

गङ्गा । एवं नाम ।

ततो निष्क्रान्ता गङ्गापृथ्वीसीताः । †

रामः । कथं विलयएव वैदेह्याः सम्पन्नः, हा देवि ! दण्ड कारण्यवासप्रियसखि ! हा चारित्रदेवते ! लोकान्तरं पर्य्यवसितासि ‡ । इति मुह्यति ।

लक्ष्म । भगवन् वाल्मीके परित्रायस्व, एष ते काव्यार्थः । §

नेपथ्ये । अपनीयतामातोद्यकं, भो भोः सजङ्गमस्थावराः प्राणभृतोमर्त्यामर्त्याः पश्यत, महर्षिणा भगवता वाल्मीकिना अनुज्ञातं ¶ पवित्रमाश्चर्य्यम् ।

लक्ष्म । विलोक्य ।

मन्थादिव क्षुभ्यति गाङ्गमम्भोव्याप्तञ्च देवर्षिभिरन्तरीक्षम् ।
आश्चर्य्यमार्य्या** सह देवताभ्यां गङ्गामहीभ्यां सलिलादुपैति ॥

पुनर्नेपथ्ये । अरुन्धति जगद्वन्द्ये गङ्गापृथ्व्यौ भजस्व नौ ।
अर्पितेयं तवाभ्यासे सीता पुण्यव्रता वधूः ॥

---

* एवं नामेति भवत्वितिशेषः ।

† निष्क्रान्ता इति सर्व्वपात्रनिष्क्रमणादङ्कसमाप्तिरिति गर्भाङ्कः समाप्त इति ज्ञेयम् ।

‡ पर्य्यवसितासि गतासि ।

§ एष आर्य्यस्य मोहजनकः ।

¶ अनुज्ञातमनुज्ञया सम्पन्नं गङ्गादीनां सलिलोत्थानादिरूपम् ।

** आर्य्या सीता ।

लक्ष्म । दिष्ट्या आश्चर्य्यमाश्चर्य्यम् । आर्य्यार्य्य ! पश्य पश्य । कष्टमद्यापि नोच्छ्वसित्यार्य्यः ।

ततः प्रविशत्यरुन्धती सीता च ।

अरु । त्वरस्व वत्से वैदेहि मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना ॥

सीता । ससम्भ्रमं स्पृशन्ती । समस्ससिदु अज्जउत्तो । (१)

रामः । समाश्वस्य सानन्दं । भोः किमेतत् । दृष्ट्वा सहर्षाद्भुतं । कथं देवी । सलज्जस्मितम् । अम्बा अरुन्धती सर्व्वे च प्रहृष्यन्त ऋष्यशृङ्गशान्तासमेता गुरवः ।

अरु । वत्स ! एषा भगीरथगृहदेवता सुप्रसन्ना गङ्गा ।

नेपथ्ये । जगत्पते रामभद्र स्मर्य्यतामालेख्यदर्शने मां प्रत्यात्मनोवचनम् । यथा सा त्वमम्ब धर्म्मतः स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भवेति, तत्रानृणास्मि जाता ।

अरु । इयन्ते श्वश्रूर्भगवती वसुन्धरा ।

नेपथ्ये । उक्तञ्च पूर्व्वमायुष्मता वत्सात्यागे, यथा भगवति वसुन्धरे श्लाघ्यां दुहितरमवेक्षस्व जानकीमिति, तदनु नाकृत वचनास्मि प्रभोर्वत्सस्येति † ।

रामः । कथं कृतमहापराधोभगवतीभ्यामनुकम्पितः, प्रणमामि वः ।

---

१ समाश्वसित्वार्य्यपुत्त्रः ।

---

* शालीनशीलतां सलज्जत्वस्वभावम् ।

† तदनु तदनन्तरं नाकृतवचनास्मि तव वचनं कृतवत्यस्मि । भूपतित्वात् प्रभोरिति, जामातृत्वाच्च वत्सस्येति रामस्य विशेषणद्वयम् ।

अरु। भोभोः पौरजानपदा! भगवतीभ्यां जाह्नवीवसुन्धराभ्यामेवं प्रशस्यमाना ममारुन्धत्याः समर्पिता, पूर्व्वञ्च भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा, सब्रह्मकैश्च देवैः संस्तुता सावित्रकुलवधूर्देवयजनसम्भवा सीता देवी परिगृह्यतामिति * कथं भवन्तोमन्यन्ते।

लक्ष्म। एवमार्य्ययारुन्धत्या निर्भर्त्सिताः प्रजाः कृत्स्नश्च भूतग्राम आर्य्यां † नमस्करोति, लोकपालाश्च सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते।

अरु। जगत्पते रामचन्द्र!

नियोजय यथाधर्म्मं ‡ प्रियां त्वं धर्म्मचारिणीम्।
हिरण्मय्याः प्रतिकृतेः § पुण्यप्रकृतिमध्वरे॥

सीता। स्वगतम्। जाणादि अज्जउत्तो सीदादुक्खं पमज्जिदुं। (१)

रामः। यथा भगवत्यादिशति।

लक्ष्म। कृतार्थोऽस्मि।

---

(१) जानात्यार्य्यपुत्रः सीतादुःखं प्रमार्ज्जयितुम्। जानातीति परिग्रहान्तरमन्तरेण हिरण्मय्या मत्प्रतिकृतेरेव यज्ञे स्वीकारादितिभावः।

---

* परिगृह्यतां रामेण परिगृहीता भवतु, इति अस्मिन् विषये।

† आर्य्यां सीताम्।

‡ यथाधर्म्मं धर्म्ममनतिक्रम्य, पुनः सीतापरिग्रहे तव धर्म्म एव भविष्यतीत्यर्थः।

§ हिरण्मय्याः प्रतिकृतेः स्थाने इति शेषः।

सीता । जीविदह्मि । (१)

लक्ष्म । आर्य्ये ! एष निर्लज्जो लक्ष्मणः प्रणमति ।

सीता । वच्छ ईदिसोवि चिरं जीव । (२)

अरु । भगवन् वाल्मीके उपनीयेतामिमौ * सीतागर्भ सम्भूतौ रामभद्रस्य पुत्रकौ कुशलवौ ॥ इति निष्क्रान्ता ॥

रामलक्ष्मणौ दृष्ट्वा । तथैव तत् ।

सीता । सवाष्पाकुला । कहिं ते पुत्तका मे । (३)

ततः प्रविशति वाल्मीकिः कुशलवौ च ।

वाल्मी । वत्सौ कुशलवौ ! एष रघुपतिः पिता युवयोः, लक्ष्मणः कनिष्ठतातः, सीतादेवी जननी, एष राजर्षिर्जनको मातामहः ।

सीता । सहर्षकरुणाद्भुतं विलोक्य । कधं तादो । (४)

कुशलवौ । हा तात ! हा अम्ब ! हा मातामह ! ।

रामलक्ष्मणौ । सहर्षमालिङ्ग्य । ननु वत्सौ ! पुण्यैः प्राप्तौ स्थः ।

सीता । एहि जाद कुश ! एहि जाद लव । चिरस्स परिस्सजंध पुणोजम्मन्तरगदं जणणिं । (५)

---

(१) जीवितास्मि ।

(२) वत्स ईदृशोऽपि चिरं जीव । ईदृशोऽपि वने मत्परित्यागं कुर्व्वन्नपि ।

(३) कुत्र तौ पुत्रकौ मे ।

(४) कथं तातः ।

(५) एहि जात कुश ! एहि जात लव ! चिरस्य परिष्वजेथां पुनरपि जन्मान्तरगतां जननीम् ।

---

* उपनीयेतामुपनयनाख्यसंस्कारवन्तौ क्रियेताम् ।

कुमारौ। तथा कृत्वा। धन्यौ स्वः।

सीता। भअवं पणमामि। (१)

वाल्मी। वत्से! इहैवमेव * चिरं भूयाः।

सीता। अह्मो तादो, कुलगुरू, अज्जाअणो, सभत्तुआ अज्जा सन्ता देई, सलक्खणा सुप्पसणा अज्जउत्त चलणा, समं कुसलवावि दीसन्ति, ता णिब्भरह्मि आणन्देण। (२)

नेपथ्ये। कलकलः।

वाल्मी। उत्थायालोक्य च। उपहतलवणो मधुरेश्वरः † प्राप्तः।

लक्ष्म। सानुषङ्गाणि ‡ कल्याणानि।

रामः। सर्व्वमिदमनुभवन्नपि न प्रत्येमि § यद्वा। प्रकृति रियमभ्युदयानाम्।

---

(१) भगवन् प्रणमामि।

(२) अम्ब, तातः, कुलगुरुः, आर्य्याजनः, सभर्तृकार्य्या शान्ता देवी, सलक्ष्मणा सुप्रसन्ना आर्य्यपुत्रचरणाः, समं कुशलवावपि दृश्यन्ते, तन्निर्भरास्मि आनन्देन। कुलगुरुर्वशिष्ठः। आर्य्याजनः कौशल्या, निर्भरा पूर्णा।

---

* इहैवमेव रामसन्निहितैव।

† उपहतोऽचिरादेव विनाशितो लवणो राक्षसविशेषो येन सः मधुरेश्वरो मथुराराजः शत्रुघ्नः।

‡ सानुषङ्गाणि सप्रसवानि कल्याणान्तरजनकानीत्यर्थः।

§ न प्रत्येमि न विश्वसिमि रामस्य कल्याणपरम्पराया असम्भाव्यमानत्वादितिभावः।

वाल्मी । रामभद्र उच्यतां, किं ते भूयः प्रियमुपकरोमि ।

रामः । अतः परमपि प्रियमस्ति । तथापीदमस्तु ।

पाप्मभ्यश्च पुनाति वर्द्धयति च श्रेयांसि येयं कथा
मङ्गल्या च मनोहरा च जगतीमातेव गङ्गेव च ।
तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपा बुधाः
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् ॥*

॥ इति निष्क्रान्ताः सर्व्वे ॥

---

इति सम्मेलनं नाम सप्तमोऽङ्कः ।

समाप्तमिदं महाकविभवभूतिविरचितमुत्तररामचरितं नाम नाटकम् ।

---

§ प्रकृतिः अभ्युदयास्पदजनकत्वस्वभावः ।

* विन्यस्तरूपा गृहीतरङ्गभूमिकाः सन्तः अभिनयैरवस्थानुकारैः परिभावयन्तु माध्येन प्रकाशयन्तु । कवेर्वाल्मीकेः, अथच मम भवभूतेः ।